२।८।१२२॥" "आनन्दचिन्मयरस" इति प्रेम्ण एव पर्याय-शब्द.–इति च तस्यार्थः। निजरूपतया स्वदारत्वेनैव स्वोयकान्ता-रूपेण। गोपालोत्तरतापनीश्रुतितो ज्ञायते दुर्वासा ऋषिः श्रीकृष्णम् उद्दिश्य श्रीराधाप्रमुखा गोपीः कथयति–"स वो हि स्वामी भवति"। स्मृतिरपि कथयति–"अनेकजन्म-सिद्धाना गोपीना पतिरेव सः"। कलाभि· ह्लादिनी-शक्ति-वृत्तिरूपाभि.।

पूर्वोक्तश्लोके ब्रह्मा कथयति, गोविन्द. स्वीयनित्य-कान्ताभि. सह गोलोके विराजते। गोपसुन्दर्य. (पृ २०)–अत एव राधा अपि–ह्लादिनीशक्तिस्वरूपा., ताश्च "आनन्द-चिन्मयरसप्रतिभाविता", प्रेमविभाविता। विभावितशब्दस्य अर्थद्वयं भवति–घटन भावन (ताम्बूलदलाना घृतकमलानां वा रसेन ओषधवटीनां यथा भावन भवति तद्वत्) च। एव च सति गोपसुन्दर्य. प्रेमद्वारा घटिता· प्रेमघनविग्रहा, तासा शरीराणि च प्रेमरसद्वारा विशेषेण भावितानि, तेषां प्रत्येक परमाणव· प्रेमरसैः परिनिषिक्ता। श्रीचैतन्यचरितामृते अपि उक्तम्–"प्रेमेर स्वरूप देह प्रेमविभावित ।।२।८।१२४।"

इत्थ ब्रह्मसहितायाः प्रमाणेन ज्ञातम् श्रीराधाद्या गोपसुन्दर्यः श्रीकृष्णस्य ह्लादिनीशक्तय, श्रीकृष्णस्य नित्यकान्ता. प्रेमघन-विग्रहाश्च।

उज्ज्वलनीलमणौ च उक्तम्–श्रीराधा महाभावस्वरूपा।

तयोरप्युभयोर्मध्ये राधिका सर्वथाऽधिका।
महाभावस्वरूपेय गुणैरतिवरीयसी ॥ श्रीराधाप्रकरणम् ।२

श्रीश्रीचैतन्यचरितामृतेऽपि उक्तम्—

कृष्णप्रेमभावित यार चित्तेन्द्रिय काय।
कृष्ण-निजशक्ति राधा—क्रीड़ार सहाय॥—१।४।६१

श्रीराधाद्याः श्रीकृष्णस्य शक्तयः इति श्रुतिरपि आह। "राधाद्याः पूर्णा शक्तय." ॥ —"स्मरति च" २।३।४५—इत्यस्य वेदान्त-सूत्रस्य गोविन्दभाष्ये सिद्धान्तरत्नग्रन्थस्य २।२२ अनुच्छेदे च धृतम्—अथर्ववेदान्तर्गत-पुरुषबोधिनीश्रुतिवचनम् इदम्। (पृ० २१)

श्रीराधा श्रीकृष्णस्य ह्लादिनी शक्तिरिति पद्मपुराणपाताल-खण्डात् अपि ज्ञायते। श्रीशिवः नारद प्राह—

राधिका परदेवता।

सर्वलक्ष्मीस्वरूपा सा कृष्णाह्लादस्वरूपिणी।
ततः सा प्रोच्यते विप्र ह्लादिनीति मनीषिभि॥—५०।५३-४

बृहद्गौतमीयतन्त्रे अपि उक्तम्—

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥

---

## श्रीश्रीराधाकृष्णयोः एकात्मता

पद्मपुराणे पातालखण्डे श्रीशिव नारद प्राह –

राधिका परदेवता ।

सा तु साक्षान्महालक्ष्मी· कृष्णो नारायण प्रभु ।
नैतयोर्विद्यते भेद स्वल्पोऽपि मुनिसत्तम ॥५०।५३।५५

–श्रीराधा परदेवता । × × । श्रीराधा साक्षात् महालक्ष्मी. । श्रीकृष्ण साक्षात् नारायण । अनयो स्वल्पमात्रोऽपि भेदो नास्ति (एतौ एकात्मानौ) । (पृ० २२)

तत्रैव अन्यत् अपि दृश्यते, श्रीराधा नारद वक्ति–

अहञ्च ललिता देवी राधिका या च गीयते ।
अहञ्च वासुदेवाख्यो नित्यकामकलात्मक· ॥
सत्यं योषित्स्वरूपाहं योपिच्चाहं सनातनी ।
अहञ्च ललिता देवी पुंरूपा कृष्णविग्रहा ।
आवयोरन्तर नास्ति सत्यं सत्यं हि नारद ॥—४४।४४–४६॥

पद्मपुराणे पातालखण्डे दृश्यते पार्वतया समीपे श्रीशिवेन श्रीराधिका "कृष्णात्मा" इति कथ्यते ।

श्रीश्रीराधाकृष्णौ एकात्मानौ इत्येतत् उल्लिखितशास्त्र-प्रमाणात् एव ज्ञायते । परवर्तिनि अनुच्छेदे नारदपञ्चरात्र-वचनात् अपि तथैव ज्ञायते । (पृ० २३)

---

## अनादिकालात् एव राधाकृष्णयोः मूर्तिद्वयेन अवस्थितिः

एकात्मानौ अपि श्रीश्रीराधाकृष्णौ अनादिकालात् एव मूर्तिद्वयेन विराजितौ इति नारदपञ्चरात्रात् अपि ज्ञायते ।

द्विभुज सोऽपि गोलोके वभ्राम रासमण्डले ।
गोपवेशश्च तरुणो जलदश्यामसुन्दर ।। ना० प० रा २।३।२१
एक ईश प्रथमतो द्विधारूपो बभूव सः ।
एका स्त्री विष्णुमाया या पुमानेक स्वय विभुः ।।
स च स्वेच्छामय श्याम' सगुणो निर्गुणः स्वयम् ।
ता दृष्टवा सुन्दरी लोला रति कर्तु'' समुद्यत. ।।—
ना, प, रा २।३।२४–२५

अन्यत् अपि उक्तम्—श्रीकृष्णो यथा ब्रह्मस्वरूपः प्रकृतेः अतीतश्च, तथा राधा अपि ब्रह्मस्वरूपा प्रकृतेः अतीता च ।

यथा ब्रह्मस्वरूपश्च श्रीकृष्ण प्रकृते परः ।
तथा ब्रह्मस्वरूपा च निर्लिप्ता प्रकृते' परा ।।—ना० प० रा, २।३।५१

श्रीराधा श्रीकृष्णश्च अनादिकालात् मूर्तिद्वयेन विराजितौ इत्यस्मिन् विषये नाधिक शास्त्रप्रमाणं प्रदर्शयितव्यम् ; यत. तयोः लीलाकथा बहुप्रसिद्धा बहुशास्त्रवर्णिता च । ऋग्वेदपरिशिष्टे अपि तयो. उल्लेखो दृश्यते ।—

"राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेषु" इत्यादिना ।

———

## गौरवर्णस्य स्वयंभगवतः समुल्लेखः।

श्रीकृष्णस्य नामकरणसमये गर्गाचार्यो महाराज-नन्दस्य समीपे प्राह—

आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुग तनू ।
शुक्लो रक्तस्तथा पीत इदानी कृष्णता गतः ॥—श्रीभा, १०।८।१३

अत्र श्लोके उक्तम्—सत्य त्रेता द्वापर. कलिश्च इत्येतेषु चतुर्षु एव युगेषु श्रीकृष्ण. पृथग् वर्णैः देहान् प्रकटयति (पृ० २५)। अत्र द्वापरे स कृष्णता प्राप्त ; पर तस्य त्रयो वर्णा. शुक्ल-रक्त-पीता अस्माद् द्वापरात् पूर्वम् एव सञ्जाता (आसन् इति अतीतकालबोधक क्रियापदम्)।

अत्र श्लोके गर्गाचार्य भङ्ग्या श्रीकृष्णस्य स्वयभगवत्ताम् एव असूचयत्। एतत् च सूचन—"गृह्णतोऽनुयुगं तनूः" "कृष्णता गत." इति आभ्या वचनाभ्या तेन दत्तम्। स्वयं भगवान् मूलावतारी इति हेतो स एव तेन अवताररूपेण तत्र तत्र युगे तेन तेन आकारेण अवतीर्णो भवति, अत एव "गृह्णतोऽनुयुग तनू (यो युगानुरूप देह प्रकटयति)"—इत्यनेन वाक्येन स्वय भगवान् एव लक्षीकृत। "कृष्णता गतः" इत्यस्य वाक्यस्य तात्पर्यं पुन इत्थम्। श्लोकस्थ-शुक्ल-रक्त-पीतशब्दानाम् उपलक्षणतया सर्वे अवतारा गृह्यन्ते (तत्र यो यः शुक्ल प्रादुर्भाव, यो यो रक्त, यो य पीतश्च,—उपलक्षकाश्चैते वर्णान्तरवताम्—वैष्णवतोषणी)।

कृषधातो कृष्णशब्दो निष्पन्न। कृष्-धातो. आकर्षणम्

अर्थ. ; य आकर्षणं करोति स कृष्णः ; कृष्णता-शब्दस्य आकर्षकता अर्थ । 'अत्र द्वापरे स कृष्णवर्णो जात ' इत्यनुक्त्वा गर्गाचार्य कथम् उक्तवान्—"इदानी कृष्णतां गत." इति ? ईदृश्या उक्ते· तात्पर्यं पुन एतत्—अस्मिन् अवतारे स स्वकीया सर्वाकर्षकतां प्रकटीकृतवान् इति । यद्यपि श्रीकृष्णः "पुरुप योषित् किम्वा स्थावर जङ्गम । सर्वचित्त आकर्षक साक्षात् मन्मथमदन ।। श्रीचै०, च, २।८।११०।।" रूप· तथापि नामकरण-काले तस्य एतादृशी सर्वचित्ताकर्षकता न प्रकाशिता । अथ च गर्गाचार्येण उक्तम्—"कृष्णतां (पृ० २६) गत."—कृष्णताम् आकर्षकता प्राप्त । तथा सति बोद्धव्यम् अन्यविधा एव आकर्षकता गर्गाचार्येण कथिता इति । परं कीदृशी सा आकर्षकता ? कं स आकृष्य आनीतवान् ? अस्य उत्तर काम्यते चेत् उक्तस्य श्लोकस्य परवर्ती श्लोक आलोच्य ।

"आसन् वर्णा" श्लोके गर्गाचार्येण भङ्ग्या कथितम्—अस्य व्रजराजतनयस्य एक नाम कृष्ण । तदुत्तरश्लोके कथितम्—वासुदेव इत्यपि अस्य नामान्तरम् इति । तद्दिन एव प्रथमं नामकरण जायते कृष्णस्य । नामकरणप्रसङ्गेन गर्गाचार्य. नामद्वयम् एव उद्घोषितवान्—कृष्ण. वासुदेवश्च इति । पर तस्य अव्यवहितपरवर्तिनि श्लोके एव गर्गाचार्येण उक्तम्—

> वहूनि सन्ति नामानि रूपाणि च सुतस्य ते ।
> गुणकर्मानुरूपाणि तान्यहं वेद नो जना ।। इति—श्रीभा, १०।८।१५

गर्गाचार्यो नन्दनन्दनस्य केवलं नामद्वयं प्रकाशितवान् कृष्णो वासुदेवश्च इति । इत पूर्वं कोऽपि तस्य किम् अपि

नाम न कृतवान् । अथच गर्गाचार्येण कथितम्—अस्य नन्दनन्दनस्य गुण-कर्मानुसारेण बहूनि नामानि रूपाणि च सन्ति (अत्र 'सन्ति' इति वर्तमानकालसूचकं क्रियापद लक्षणीयम्) । अस्य तात्पर्यं किम् ? कानि वा तानि बहूनि नामानि रूपाणि च ।

यदा कश्चित् जीव. अपि मानुषरूपेण जन्म गृह्णाति, सम्भाव्यते—तत पूर्वं स देव-गन्धर्व-मनुष्य-पशु-पक्षि-कीट-पतङ्ग-वृक्ष-लताद्यनेका योनी. परिभ्रम्य आगत. । तस्या तस्या योनौ तस्य नामविशेषा रूपविशेषाश्च आसन् । तानि नामानि रूपाणि च (पृ० २७) तस्य गुणकर्मानुसारीणि आसन् । किन्तु यदा स मानुषरूपेण जन्मग्रहण करोति, तदा तस्य नामकरणकाले तानि सर्वाणि नामरूपाणि सस्मृत्य न कोऽपि वदति—तस्य बहूनि नामानि रूपाणि च "सन्ति" इति । वर वक्तुं शक्नोति—तस्य बहूनि नामानि रूपाणि च "आसन्" इति । अस्मिन् श्लोके "बहूनि सन्ति नामानि" इत्यनेन वाक्येन सूच्यते यत्, यस्य नामकरण क्रियते स नन्दनन्दनो न जीवतत्त्वम् । तर्हि क स ? स भगवान् । "गृह्णतोऽनुयुग तनू." इत्यनेन वाक्येन अपि तद् उक्तम् ।" सन्ति" इति वर्तमानकालबोधक-क्रियापदेन नामरूपादीनां नित्यत्वम् एव सूचित भवति । केवल भगवत्स्वरूपाणाम् एव नाम-रूपे नित्ये भवत. नान्येषाम् । अस्मिन् श्लोके यानि बहूनि नित्य-नामानि नित्य-रूपाणि च उच्यन्ते तानि सर्वाणि नित्य-भगवत्स्वरूपाणाम् एव नामानि रूपाणि च । एतेषा भगवत्स्वरूपाणा नाम-रूपाणि एव श्रीकृष्णस्य नित्यनाम-रूपतया वर्णितानि । एतेन एतद् एव सूच्यते यत्, एतानि भगवत्स्वरूपाणि श्रीकृष्णस्य

एव प्रकाशभूतानि । श्रीकृष्ण एव अनादिकालात् एतेषु भगवत्-स्वरूपेषु आत्मान प्रकटीकृत्य विराजते इति। एतेन अपि सूच्यते यत् श्रीकृष्णः स्वयं भगवान् इति। परब्रह्म एव अनादि-कालात् नारायण-राम-नृसिंहाद्यनेक-भगवत्स्वरूपेण विराजते। "एकोऽपि सन् यो बहुधावभाति"—गोपालतापनी श्रुति । पूर्वोक्तस्य "आसन् वर्णा." इत्यादिश्लोकस्य "शुक्लो रक्तस्तथा पीतः" इत्यादे उपलक्षणतया एतेषा भगवत्स्वरूपाणा कथैव कथिता। नन्दनन्दन. एतानि सर्वाणि भगवत्स्वरूपाणि आकृष्य स्वान्तर्गतानि विधाय आत्मप्रकाशम् अकरोत्, तेनैव तस्य "कृष्णता—आकर्षकता"। सर्वाणि भगवत्स्वरूपाणि आत्मनि आकृष्य (पृ० २८) एव तेन कृष्णता प्राप्ता । एतत् एव "कृष्णतां गत" इति वाक्यस्य तात्पर्यम्। तावद्भगवत्-स्वरूपाणा यो मूलं त विना नान्य समस्तभगवत्स्वरूपाणि स्वस्मिन् आकर्ष्टुं शक्नोति। समस्तभगवत्स्वरूपाणा मूल स्वय भगवान् ।

यँार भगवत्ता हैते अन्येर भगवत्ता।
स्वय भगवान् शब्देर ताँहातेइ सत्ता ।।—श्रीचै, च, १।२।७४

अतः श्रीकृष्णः स्वयं भगवान्, "कृष्णता गत." इति वाक्येन तद् एव सूच्यते। वस्तुत. स्वय भगवान् यदा अवतरति तदा 'अन्यानि सर्वाणि भगवत्स्वरूपाणि अपि तस्यैव विग्रहे अवस्थिति कुर्वन्ति'

पूर्ण भगवान् अवतरे येइ काले ।
आर सब अबतार ताते आसि मिले ।।

नारायण चतुर्व्यूह मत्स्याद्यवतार ।
युगमन्वन्तरावतार यत आछे आर ।।
सभ आसि कृष्ण अङ्गे हय अवतीर्ण ।
ऐछे अवतरे कृष्ण भगवान् पूर्ण ।। श्रीचै, च, १।४।९-११

बृहद्भागवतामृतम् अपि वदति—"एक. स कृष्णो निखिलावतार-समष्टिरूप. । बृ० भा, २।४।१८६'

पूर्वोक्तात् आलोचनात् ज्ञातम्, नन्दनन्दन श्रीकृष्णः स्वयं भगवान् इति ।

इदानी श्लोकस्य "शुक्लो रक्तस्तथा पीत" इत्यंगस्य आलोचनं क्रियते । श्लोके उक्तम्—

नन्दनन्दन. युगभेदेन विभिन्नान् वर्णान् धारयति इति । युगानि च चत्वारि—सत्य त्रेता द्वापर कलिश्च । द्वापरे स कृष्णवर्ण धृतवान् । एव च त्रीणि युगानि अवशिष्यन्ते—सत्यं त्रेता कलिश्च । वर्णान् अपि त्रीन् अधारयत्—शुक्लः रक्त· पीतश्च इति । शुक्ल सत्ययुगस्य युगावतार, रक्तः त्रेतायुगस्य , अत , युगावताररूपेण स सत्ययुगे एव शुक्लवर्ण त्रेतायाम् एव च रक्तवर्णम् अधारयत् इति सरलतया एव ज्ञायते । इदानी पीतवर्ण· कलियुगं च अवशिष्येते । एवं च कलियुगे एव स पीतवर्ण अभूत् इत्येव बुध्यते । परन्तु यस्य चतुर्युगस्य द्वापरे नन्दनन्दनस्य नामकरणं प्रवृत्तं तस्य चतुर्युगस्य अन्तर्गत कलियुग तदानीम् अपि न आगतम् । अथ च उक्तम्—शुक्ल-रक्तवत् पीतोऽपि अतीतः (आसन् वर्णास्त्रय ) । एतेन प्रतीयते यत्, नन्दनन्दनः पूर्ववर्तिनः कस्यचन चतुर्युगस्य कलौ एव पीतवर्ण अभूत् इति गर्गाचार्यस्य

अभिप्राय: । इदानी द्रष्टव्य पूर्वस्मिन् क्वचन कलौ स किं युगावताररूपेणैव पीतवर्ण. अभूत् अथवा अन्येन केनचन रूपेण इति । एतच्च श्लोकस्थ-तथाशब्दस्य साहाय्येन निर्णेयम्—"तथा पीत: ।"

क्वचित् क्वचित् पादपूरणार्थ च, वै, तु हि इत्यादय: शब्दा. श्लोके प्रयुज्यन्ते । पादपूरणार्थ व्यवहृतानाम् एषा तत्काले अर्थान्तर न वर्तते । पर "तथा" शब्द. पादपूरणार्थं न कदापि प्रयुज्यते । अत: प्रकृतश्लोकस्थ "तथा" शब्दो न निरर्थक. । श्लोकस्य अर्थनिर्णये अयं तथाशब्दो न उपेक्षणीय, "तथा"शब्दस्य व्यञ्जना विना श्लोकस्य अभीष्टं तात्पर्यम् अवगन्तु न शक्यम् । "तथा"शब्द च "यथा"शब्दस्य सहचर, द्वयम् एकत्र एव तिष्ठति ; यत्र "तथा" तत्र "यथा" अपि (पृ० ३०) वर्तते, एवम् एव यत्र "यथा" वर्तते तत्र "तथा" अपि वर्तते इति मन्तव्यम् । क्वचित् च छन्दोभङ्ग-भयेन "यथा" "तथा" शब्दयो अन्यतर ऊह्य. अपि भवति । अस्मिन् श्लोके अपि छन्दोऽनुरोधेन "यथा" शब्दो न लिखित: किन्तु ऊह्य इति मन्तव्यम्, श्लोकार्थनिर्णयकाले च ऊह्यस्य "यथा"शब्दस्य योग कर्तव्य. ,अन्यथा प्रकृतोऽर्थ. न लभ्य. ।

इदानी द्रष्टव्य श्लोकस्थेन केन शब्देन "यथा" शब्दस्य अन्वयो भवेत् । "तथा" शब्देन सह "पीत" शब्दस्य अन्वयस्तु श्लोके कण्ठोक्त एव—"तथा पीत.' ।

श्लोकस्य प्रथमार्धे "यथा" शब्दस्य अन्वयो भवितु न अर्हति इति तु पूर्व प्रथमार्धस्य या आलोचना कृता तत. स्पष्टम् एव प्रतीयेत । श्लोकस्य शेषार्धे एव क्वचन प्रदेशे "यथा"

शब्द प्रयोक्तव्य । शेषार्धस्य स्थानद्वये "यथा शब्द प्रयोक्तु शक्यते—"यथा शुक्लो रक्त, तथा पीत" इति, "यथा कृष्णता गत, तथा पीत (पीतता गत)" इति वा । इदानीम् आलोचनीयम् अनयो द्विविधयो अन्वययो कतरो विचारसह इति । तत्र आदौ "यथा शुक्लो रक्त, तथा पीत" इत्यस्य अन्वयस्य विचार क्रियते ।

यथा-तथाद्वारा यौ शब्दौ अन्वीयेते तयो शब्दयो केनचन समानेन धर्मेण स्थातव्यम्, समानधर्मत्व (साधर्म्य) सूचनार्थम् एव यथा-तथाशब्दौ प्रयुज्येते । यथोक्ते अन्वये ग्रहीतव्ये च—शुक्ल-रक्तयो यो धर्म यत् स्वरूप वा पीतस्य अपि स धर्म तत् स्वरूप वा इति अर्थो मन्तव्य । शुक्लरक्तौ तावत् यथाक्रम सत्य-त्रेतयो युगावतारौ, अत एवविधे अन्वये ग्रहीतव्ये पीत अपि युगावतार—कले युगावतार—इति मन्तव्यम् । पर शास्त्र वक्ति, कले युगावतार—कृष्ण (अय न नन्दनन्दन स्वय भगवान् कृष्ण, अपि तु तस्य अशमात्रम्), तस्य नाम अपि कृष्ण, (पृ० ३१) वर्ण. अपि कृष्ण, "कथ्यते वर्णनामभ्या शुक्ल सत्ययुगे हरि । रक्त श्याम क्रमात् कृष्णस्त्रेताया द्वापरे कलौ ।।—लघुभागवतामृते युगावतार-प्रकरणम् ।। २५ ।।"—श्रीहरिवशमते अपि कले युगावतार कृष्ण—"कृष्ण कलियुगे विभु—लघुभागवतामृतटीकाधृत-वचनम् ।।" विष्णुधर्मोत्तरमते पुन—"द्वापरे शुकपत्राभ कलौ श्याम प्रकीर्तित ।—श्रीभा, ११।५।२५-श्लोकस्य क्रमसन्दर्भ-टीकाधृतवचनम् ।" अत्र द्वापरस्य युगावतारविषये मतद्वय लभ्यते, लघुभागवतामृतमते स श्याम, विष्णुधर्मोत्तरमते

पुन:—शुकपत्राभ', शुकपक्षिण' पक्षवर्णतुल्यवर्ण । आपातदृष्ट्या अत्र विरोधे प्रतीयमाने अपि वस्तुगतया विरोधो नास्ति। शब्दकल्पद्रुमाख्ये कोषे मेदिनीकोषस्य प्रमाणम् उद्धृत्य श्याम-शब्दस्य हरिद्वर्ण इति एक अर्थ' कृतः ; शुकपत्राभशब्देन अपि हरिद्वर्णं प्रतीयते। श्रीमद्भागवतस्य ११।५।२५-श्लोक-व्याख्याया श्रीजीवगोस्वामिना अपि लिखितम्—"सामान्यतस्तु द्वापरे शुकपत्रवर्णत्वम् ।" अत श्याम-शुकपत्राभ-शब्दद्वयम् एकम् एव हरिद्वर्णरूपम् अर्थ प्रकाशयति। शस्यश्यामला वसुन्धरा इति अस्माकम् अपि प्रयोग' । शस्यस्य वर्ण—हरित्, अय श्यामल इति अपि उच्यते। उल्लिखित-प्रमाणसमूहेन कले: युगावतारविषये अपि मतद्वय लब्धम् , हरिवशमते—कृष्ण , विष्णुधर्मोत्तरमते—श्याम । अत्र अपि वास्तविक कोऽपि विरोध. नास्ति , यत श्यामशब्दस्य नितरा प्रसिद्ध अर्थ (पृ० ३२) एव—कृष्ण , अत एव श्रीकृष्ण श्यामसुन्दर इति राधाकृष्णौ च राधाश्यामौ इति उच्यते। यदस्तु, शास्त्रप्रमाणात् ज्ञातम्, कले साधारणयुगावतारस्य नाम कृष्ण तस्य वर्ण अपि कृष्ण , पर तु कले युगावतार पीत इति न केन अपि शास्त्रप्रमाणेन लभ्यते। पूर्वम् एव उक्तम्—"यथा शुक्लो रक्त तथा पीत" इत्यन्वये ग्रहीतव्ये मन्तव्य यत्, शुक्ल-रक्तौ यथा सत्य-त्रेतयो साधारणयुगावतारौ तथा पीत अपि कले. साधारणयुगावतार , पर न तत् शास्त्रसम्मतम् , अत "यथा शुक्लो रक्त तथा पीत" इत्यन्वयोऽपि न ग्राह्य —इति। एव सति अपर अन्वय एव ग्राह्य., तेन अन्वयेन य. अर्थ लभ्यते स एव च ग्रहणीय ; अन्यथा तथाशब्द उपेक्षित: स्यात् ।

अपर. अन्वयश्च—"यथा कृष्णता गत, तथा पीत. (पीतता गत )" इति । पूर्वम् एव उक्तम्, "कृष्णता गत" इति वाक्येन नन्दनन्दनस्य स्वय भगवत्ता सूचिता भवति इति, अत "पीत—" शब्देनापि स्वय भगवत्ता एव ज्ञाप्येत, अन्यथा 'यथा-तथा शब्दसूचित समानधर्मत्वम् एव न तिष्ठेत् । तथा सति एतत् विज्ञात यत्—पूर्व क्वचित् कलौ स्वय भगवान् नन्दनन्दन एव स्वयभगवद्रूपेण पीत ,सन् अवततार इति । पीतशब्देन स्वर्णवर्णो गौरवर्णो वा व्याख्यायते । अत पूर्व क्वचन कलिकाले स्वयभगवान् श्रीकृष्ण गौरवर्णेन अवततार इति "आसन् वर्णा" इत्यादिश्लोकादवगतम् ।

पूर्वालोचिते अशे क्वचित् क्वचित् "साधारणयुगावतार" शब्दो व्यवहृत , अस्य तात्पर्यम् इदम्—यत्र युगे स्वय भगवान् अवतरति, तस्य युगस्य युगावतार पुन पृथक् न अवतरति, स तु स्वय भगवत अन्तर्गत एव तिष्ठति । यदा पुन स्वय भगवान् नावतरति (पृ० ३३) तत्र युगे युगावतार स्वेन रूपेण नाम्ना च अवतीर्णो भवति, स एव "साधारणयुगावतार" इत्युच्यते । इत्थ शुक्ल सत्ययुगस्य साधारणयुगावतार, रक्त त्रेताया साधारणयुगावतार, शुकपत्राभ (श्याम) द्वापरस्य साधारणयुगावतार, तथा कृष्ण (नाय स्वय भगवान् कृष्ण, पर तस्य अगभूत ) कले साधारणयुगावतार । यत्र कलौ स्वय भगवान् श्रीकृष्ण पीतवर्ण सन् अवतीर्णो बभूव, तत्र कलौ पुन कले साधारणयुगावतार कृष्ण पृथक् न अवतीर्णो बभूव । स्वय भगवान् ब्रह्मण दिवसे एकवारम् अवतीर्णो भवति ।

पूर्ण भगवान् कृष्ण व्रजेन्द्रकुमार ।
गोलोके व्रजेर सह नित्य विहार ॥
ब्रह्मार एकदिने तेँहो एकवार ।
अवतीर्ण हय्या करेन प्रकटविहार ॥ श्रीचैं, च, १।३।३-४ ॥

विष्णुपुराणमते ब्रह्मण एकस्मिन् दिने सहस्रं चतुर्युग वर्तते—सहस्र सत्ययुगानि, सहस्र त्रेता, सहस्र द्वापराणि, सहस्र कलियुगानि च इति । तथा च उक्तम्—

कृत त्रेता द्वापरञ्च कलिश्चैव चतुर्युगम् ।
प्रोच्यते तत्सहस्रञ्च ब्रह्मणो दिवस मुने ॥—वि, पु, १।३।१४

यद् भवतु, पूर्वकृतया आलोचनया विज्ञात यत् स्वय भगवान् श्रीकृष्ण सर्वस्मिन् कलियुगे पीतवर्णेन न आविर्भवति, पर क्वचिदेव कलौ तथाविधरूपेण आविर्भवति इति । कस्मिन् कलौ सः (पृ० ३४) पीतवर्णेन गौरवर्णेन वा अवतीर्णो भवति इति तु श्रीमद्भागवतस्य "कृष्णवर्ण त्विषाकृष्ण" इत्यादि-श्लोकेन निर्णेतु शक्यम् । इदानीम् अस्य श्लोकस्य आलोचना क्रियते ।

———

## कस्मिन् कलौ स्वयंभगवतः गौरवर्णेन अवतारः

अतीतपूर्वे द्वापरयुगे* कवि हवि अन्तरिक्ष प्रबुद्ध. पिप्पलायन आविर्होत्र द्रुमिल चमस करभाजन च–एते नव योगीन्द्रा महाराजस्य निमे समीपे उपस्थिता बभूवु । निमि-महाराजकृतप्रश्नस्योत्तररूपेण ते अनेका तत्त्वकथा प्रकाशित-वन्त । कस्मिन् युगे भगवान् केन रूपेण अवतीर्णो भवति, कस्मिन् युगे क उपास्य, तस्य उपासनाया विधि वा क, इत्यस्मिन् प्रश्ने निमिना उत्थापिते नवानाम् ऋषीणाम् अन्यतम. करभाजन सत्यत्रेताद्वापरेषु उपास्याना स्वरूपम् उपासनाविधि च अभिधाय पश्चात् कलौ उपास्यस्य उपासनाया च विवरणं चकार ।

करभाजनस्य ऋषे वचनतात्पर्य बोद्धम् इच्छता जनेन एका वाणी अवश्य स्मर्तव्या । सा च इयम्—। श्रुते ज्ञायते—वेदा इतिहास (महाभारतम्) पुराण च अपौरुषेय परब्रह्मणो निश्वासभूत च । तथा च श्रुति—"एव वा अरे अस्य महतो भूतस्य निश्वसितम् एतद् यद् ऋग्वेदो यजुर्वेद सामवेदोऽथर्वा-ङ्गिरस इतिहास पुराणम्" इति । मत्स्यपुराणात् ज्ञायते, इदम् अपौरुषेय पुराणम् एकम् एव आसीत्, तत् च शतकोटि-श्लोकात्मकम् । "पुराणमेकमेवासीत् (पृ ३५) तदा कल्पान्तरेऽनघ । त्रिवर्गसाधन पुण्य शतकोटिप्रविस्तरम् ।। मत्स्यपु,

* केषाञ्चित् मते गते त्रेतायुगे एव निमिर्महाराज विदेहे राजत्वं चकार ।

५३।४ ।।" प्रतिद्वापर भगवान् व्यासरूपेण चतुर्लक्षश्लोकानि अष्टादश पुराणानि भूलोके प्रकाशयति । देवलोके तु अद्यापि शतकोटिश्लोकात्मक पुराण वर्तते ।

कालेनाग्रहण दृष्ट्वा पुराणस्य ततो नृप ।
व्यासरूपमह कृत्वा सहरामि युगे युगे ।।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।
तथाऽष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते ।
अद्यापि देवलोकेऽस्मिञ्छतकोटिप्रविस्तरम् ।। मत्स्यपु० ३।८-१०

प्रतिद्वापर यानि चतुर्लक्षश्लोकात्मकानि अष्टादश पुराणानि प्रकटीभवन्ति, तानि च एतद् द्वापर यस्य चतुर्युगस्यान्तर्गत तस्य चतुर्युगस्य उपयोगीनि । अद्य यानि पुराणानि प्रचलद्रूपाणि वर्तन्ते एतानि च वर्तमानचतुर्युगोपयोगीनि । ऋषिणा करभाजनेन चतुर्युगस्य उपास्योपासनविषये यद् उक्त तद् अपि वर्तमानचतुर्युगस्य अन्तर्गताना सत्यादीना विषये । यच्च तेन कलियुगस्य उपास्योपासनम् उक्त तद् अपि वर्तमानकलिविषये । द्वापरे त्रेतायाम् एव वा तेन एतत् कथितम् ।

करभाजन ऋषि कले उपास्योपासन यद् उक्तवान् तद् इत्थम्—

कृष्णवर्ण त्विषाकृष्ण साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञै सङ्कीर्तनप्रायर्यजन्ति हि सुमेधस ।। श्रीभा, ११।५।३२

अस्य श्लोकस्य द्वितीयार्धे कलियुगोपास्यस्य भगवत उपासनाविधि उक्त —सुमेधस जना सङ्कीर्तनप्रधानै उपचारै तम् अर्चयन्ति इति । कलौ उपास्यरूपेण अवतरिष्यत.

परिचय. पुन. प्रथमार्धे दत्त —साङ्गोपाङ्गास्त्रपार्श्वद कृष्णवर्ण त्विषाकृष्ण च । एतेषा शब्दानाम् अर्था इदानी विवेच्यन्ते ।

साङ्गोपाङ्गास्त्रपार्षदम्—अङ्गोपाङ्गरूपाभ्याम् अस्त्रपार्षदाभ्या सह वर्तमानम्, कलियुगोपास्यस्य अङ्गानि उपाङ्गानि च तस्य पार्षदानाम् अस्त्राणा च व्यापार निर्वाहयन्ति इत्यर्थ । यत् उद्दिश्य भगवान् अवतरति, तस्य अस्त्राणि पार्षदाश्च तदुद्देश्यसिद्धे आनुकूल्य विदधति। यदुद्देश्यसिद्ध्यर्थं कलियुगोपास्य अवतरिष्यति तस्य अङ्गानि उपाङ्गानि च तदुद्देश्यसिद्धे आनुकूल्य करिष्यन्ति, अत एव तस्य अङ्गानि उपाङ्गानि च अस्त्र-पार्षद-नामभ्याम् अभिहितानि ।

कलिकालोपास्यस्य स्वरूप वर्णित—"कृष्णवर्ण त्विषाकृष्णम्" इति । एषा शब्दाना स्वरूप बुभुत्सता, एतत् अवश्य स्मर्तव्यम् यत्, अस्मिन् श्लोके वर्तमान-चतुर्युगान्तर्गत-कलियुगीय उपास्य एव वर्णनीयत्वेन गृहीत इति तु पूर्वम् एव उक्तम् । अत तत्सम्बन्धिन्याम् आलोचनाया श्रीनृसिहदेवसमीपे प्रह्लादेन उक्तम् इद वचन स्मर्तव्य—"छन्न कलौ यदभवस्त्रियुगोऽथ स त्वम्" श्रीभा, ७।९।३८ इति । छद् धातो छन्नशब्द. निष्पन्न , छद् धातो च आच्छादनम् अर्थ , एव च छन्नशब्दस्य आच्छादितार्थतया प्रवृत्त-चतुर्युगान्तर्गत-कलौ अवतरिष्यतो विग्रह आच्छादितो भविष्यति इत्यर्थ आयाति। एतेन च तद्विग्रहस्य स्वाभाविक रूप प्रायेण (पृ० ३७) दृष्टिगोचर न स्यात्, अत एव तस्य कान्ति अपि अदृश्या एव तिष्ठेत् । येन स आच्छादित स्यात् तस्य एव रूपं कान्ति वा वहि. लक्षिता भविष्यति इति प्राप्यते । इद छन्नत्वम् एव

वर्तमान-चतुर्युगीयकलौ अवतरतो विशिष्ट लक्षणम् । यत्र एतत् लक्षण नास्ति एतत्कलियुगस्य अवताररूपेण स न ग्राह्य । यत, विशेषलक्षणेन एव वस्तु विज्ञायते न पुन. सामान्य-लक्षणेन । न हि रोमवल्लाङ्गूलविशिष्ट. चतुष्पदो जीव इत्युक्ते एव गो परिचीयते, महिषादीनाम् अनेकेषाम् एव जीवाना रोमवल्लाङ्गूलादिविशिष्टत्वात् । किन्तु सास्ना (गलकम्बल ) एव गो विशेषलक्षणम्, अनन विशेषलक्षणेन विना गो न ज्ञातु शक्यते ।

श्लोके "कृष्णवर्णं त्विषाकृष्णम्" इत्यशस्य अनेके अर्था: सम्भवन्ति । पर येन यै वा अर्थैं पूर्वोक्त छन्नत्वरूप-विशेष-लक्षण व्यक्तीभवेत्, वर्तमान-चतुर्युगान्तर्गत-कलिकालोपास्यस्य स्वरूपनिर्णये स अर्थ ते वा अर्था. केवल ग्राह्या.—इत्येतत् मनसि विधाय आलोचन कर्तव्यम् । इदानी प्रकृताशस्य अर्था आलोच्यन्ते ।

"कृष्णवर्णं" इति शब्दस्य अर्थद्वय सम्भवति । कृष्ण वर्ण यस्य स कृष्णवर्ण—कृष्णवर्णविशिष्ट इति एक अर्थ । कृष्ण—कृष्णस्य रूपगुणलीलादिक वर्णयति य स कृष्णवर्ण इति द्वितीय अर्थ । अनयो. एकतरो वा ग्रहणीय. द्वौ एव वा ग्रहणीयौ—इति तु "त्विषाकृष्ण" शब्दस्य अर्थेन सह सङ्गति विधाय एव निर्णेयम् ।

"त्विषाकृष्ण" इत्येतत् पुन शब्दद्वय वा एक शब्दो वा भवितुम् अर्हति । त्विषा कृष्ण इति छेदे तु शब्दद्वय स्पष्टम् (पृ० ३८) एव । त्विष्शब्दस्य तेज कान्ति वा अर्थ ; एव च त्विषा कृष्ण इत्यन्वयेन यस्य कान्ति: कृष्ण. स

प्रतीयते । त्विपा अकृष्ण इति च्छेदे तु सन्धौ एकपदम् इत्व भवति–त्विपाकृष्ण इति, अस्य अर्थस्तु कान्त्या अकृष्ण, पूर्वोक्तार्थविपरीत अर्थ । विशेपलक्षणेन सह "कृष्णवर्ण"-शब्दस्य अर्थेन च सह सङ्गति विधाय निर्णतव्य यत्–"त्विषाकृष्ण" शब्दस्य परस्पविरोधिनो अनयो. अर्थयो मध्ये कतरो ग्रहणीय इति ।

आदौ, "त्विपा कृष्ण" इति च्छेदपक्षे "कृष्णवर्ण" शब्दस्य यत् अर्थद्वय पूर्व कृत तेन अर्थेन सह क्वापि सङ्गति सम्भवति न वा इति विवेचनीयम् । "कृष्णवर्ण" शब्दस्य एकतर अर्थस्तु यस्य वर्ण कृष्ण स इति, यस्य वर्ण कृष्ण स यदि त्विपा अपि कृष्ण स्यात् तदा पूर्वोद्दिष्ट "छन्नत्व" न लभ्यते, यत अनाच्छादितस्वरूपस्य कृष्णवर्णस्य वस्तुन कृष्णता एव स्वाभाविकी । अत "छन्नत्व"स्य अलाभात्, अयम् अर्थो न ग्राह्य ।

इदानी द्रष्टव्य पूर्वोद्दिष्टच्छेदपक्षे एव "कृष्णवर्ण" शब्दस्य "कृष्ण वर्णयति य स." इत्यर्थेन सह सङ्गति स्यात् न वा इति । 'य कृष्ण वर्णयति इत्युक्ते' तस्य वर्णो न ज्ञायते, किन्तु, तस्य वर्ण यदि अकृष्ण कल्प्यते एव स "त्विपा कृष्ण" चेत् भवति तदा "छन्नत्व" प्रतीति भवितुम् अर्हति । पर स क स्यात् ? स्वय भगवान् वा स्यात्, लीलावतारो वा स्यात्, युगावतारो वा स्यात्–नूनम् एतेपु कोऽपि भवेत्, (पृ० ३९) यत, एतेन रूपत्रयेण एव भगवान् ब्रह्माण्डे अवतरति । एतेपु पुन लीलावतार वर्जनीय, कलौ भगवत: लीलावतारविरहात् । अत एव उक्तम्–

"कलियुगे लीलावतार ना करे भगवान् ।
अतएव त्रियुग करि कहि तार नाम ॥ ॥

श्रीचै, च, २।६।९७ ॥"

परित्यक्ते लीलावतारे स्वय भगवान् युगावतारश्च अवशिष्येते । स्वयभगवत श्रीकृष्णस्य वर्णः कृष्ण', कलेः साधारणयुगावतारस्य वर्ण. अपि कृष्ण । अनयो कोऽपि यदि कलौ अवतीर्य कृष्ण वर्णयेत् एव स यदि "त्विषा कृष्ण" स्यात् तदा "छन्नत्व" न लभ्यते, यत , य कृष्णवर्ण' वर्णान्तरेण आच्छादितस्य तस्य कान्ति. कृष्णा न स्यात् ।

एतावता ज्ञातं यत् "त्विषा कृष्ण" इति च्छेदे विशेषलक्षणेन छन्नत्वेन सह सामञ्जस्य विदधत् कश्चित् अर्थो न लभ्यते । अत "त्विषा कृष्ण" इति च्छेदो न विचारसह ।

इदानी "त्विषाकृष्ण" इत्यस्य त्विषा अकृष्ण इति च्छेदम् अवलम्ब्य विचारसह कोऽपि अर्थो लभ्यते न वा इति विचार्यम् ।

"कृष्णवर्ण" शब्दस्य "यस्य वर्ण कृष्ण" इत्यर्थे कृते "त्विषा अकृष्ण" इति च्छेदपक्षे अर्थसङ्गति भवति न वा इति तावत् द्रष्टव्यम् । यस्य वर्ण कृष्ण कान्तिस्तु अकृष्णा, स नून केनचिद् वर्णेन आच्छादितस्वरूप इति तु अनायासेन अवगम्यते । एतेन च अर्थेन विशेषलक्षण "छन्नत्व" प्राप्यते इति अयम् अर्थो ग्राह्य । (पृ० ४०)

अत पर 'कृष्णवर्ण" शब्दस्य "य कृष्ण वर्णयति" इत्यर्थ गृहीत्वा विचार प्रवर्त्यताम् । य' कृष्ण वर्णयति तस्य को

वर्ण इति काम न ज्ञायते। पर तस्य कान्ति "अकृष्णा। ईदृग अय क स्यात्? पूर्व कृतया आलोचनया ज्ञात यत्, कलो लीलावतारो नास्ति इति। एव चेत् स स्वय भगवान् श्रीकृष्ण स्यात्, साधारणयुगावतारो वा स्यात्। स्वयं भगवान् कृष्णो वा साधारण-युगावतार-कृष्णो वा कलियुगो-पास्यरूपेण यदि अकृष्णकान्त्या अवतरेत् तर्हि विशेपलक्षणं "छन्नत्व" लभ्येत, अत ईदृशोऽर्थ ग्राह्यो भवितुमर्हति।

करभाजन ऋपि किम् उक्तवान्, तत् इदानी निणतव्यम्। कि स्वय भगवान् श्रीकृष्ण एव "अकृष्णवर्णेन" आच्छादित कलौ अवतरिष्यति इति तेन उक्तम्? आहोस्वित् युगावतार कृष्ण इति। युगावतार वर्णान्तरेण आच्छादित अवतरति इति अस्मिन् विपये किम् अपि प्रमाण क्वापि शास्त्रे न दृश्यते। अत "अकृष्णवर्णेन" आच्छादित युगावतार कृष्ण कलौ अवतरिष्यति—इद करभाजनस्य ऋषे अभिप्रेत भवितु न अर्हति। स्वय भगवान् कृष्ण क्वचन विशेपकलौ "पीतवर्णेन" अवतरति इति तु पूर्वोक्तात् "आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगु तनू। शुक्लो रक्तस्तथा पीत इदानी कृष्णता गत।" श्लोकात् ज्ञायते। अत एव स्वय भगवान् कृष्ण एव वर्तमानचतुर्युगान्तर्गतकलौ "अकृष्णवर्णेन" आच्छादित अव-तरिष्यति—इति एव करभाजनेन ऋपिणा कथितम् इति बोद्धव्यम्। परम् अयम् "अकृष्णवर्ण" किमात्मक? "आसन् वर्णा"श्लोकात् ज्ञायते, स्वय भगवान् श्रीकृष्ण क्वचन विशेष-कलौ "पीत"वर्णेन अवतरति, स्वयभगवद्रूपेण स "कृष्ण"वर्ण "पीत"वर्ण वा विहाय केनापि वर्णान्तरेण (पृ० ४१)

अवतीर्णो भवतीत्यत्र किम् अपि प्रमाण क्वापि शास्त्रे न परिलक्ष्यते । अत "अकृष्ण" पदेन "पीत"वर्ण एव प्रत्याय्यते । अत एव कविराज-गोस्वामिना कथितम्—

"अकृष्ण वरणे कहे पीतवरण ॥ श्रीचै, च, १।३।४५ ॥"

पीतवर्ण स्वर्णवर्ण, गौरवर्ण इत्यनर्थान्तरम् ।

इत्थ "कृष्णवर्ण त्विषाकृष्ण" इत्यादिश्लोकेन ज्ञायते यत्, वर्तमानकलौ उपास्यतया अवतरिष्यन्त य करभाजन ऋषि. द्वापरे एव कथितवान्, स स्वय भगवान् कृष्ण , पर तस्य स्वीय कृष्णवर्ण पीतवर्णेन गौरवर्णेन वा समाच्छादितो भविष्यति एव तस्य अङ्गानि उपाङ्गानि च तस्य अस्त्रस्य पार्षदाना च कृत्य निर्वाहयिष्यन्ति च इति ।

व्यतीते द्वापरयुगे स्वय भगवान् श्रीकृष्ण ब्रह्माण्डे अवतीर्णो बभूव, करभाजन कथितवान्—तस्य द्वापरस्य अव्यवहित-परिवर्तिनि वर्तमानकलौ स एव पुन पीतवर्णेन गौरवर्णेन वा अवतरिष्यति इति । एतत् अपि ज्ञात यत् क्वचन विशेषकलौ एव स्वय भगवान् पीतवर्णेन गौरवर्णेन वा अवतरति न पुन सर्वस्मिन् एव कलौ इति । यदि सर्वस्मिन् एव कलौ स पीत-वर्णेन अवातरिष्यत् तदा शास्त्रे साधारणयुगावतारस्य कथा वर्णिता न अभविष्यत् । एतावता ज्ञातम्—यस्मिन् द्वापरे स्वय भगवान् व्रजेन्द्रनन्दन श्रीकृष्ण अवतीर्णो भवति तस्य अव्यवहितपरवर्ति कलियुगम एव विशेष-कलियुगम्, तत्र एव विशेषकलियुगे श्रीकृष्ण गौरवर्णेन अवतीर्णो भवति इति ।

---

## स्वयंभगवतः गौरत्वकारणम्

"कृष्णवर्णं त्विषाकृष्णं" इत्यादिश्लोकस्य आलोचनया ज्ञातं यत् विशेषकलौ (यस्मिन् द्वापरे स्वयं भगवान् व्रजेन्द्र-नन्दनः ब्रह्माण्डे अवतीर्णो भवति, तस्य द्वापरस्य अव्यवहित-परवर्तिनि कलौ) स्वयं भगवान् श्रीकृष्ण एव स्वीयं श्याम-वर्णं गौरवर्णेन समाच्छाद्य अवतीर्णो भवति इति। अयं गौरवर्णः श्रीकृष्णः अपि व्रजेन्द्रनन्दनस्यैव आविर्भावविशेषः।

बहुभेदभिन्नानि भगवत्स्वरूपाणि आकृतितो भिन्नानि अपि मूलतः एकतत्त्वात्मकानि। यतः एक एव स्वयं भगवान् व्रजेन्द्रनन्दनः अनादिकालात् विविधेन भगवत्स्वरूपेण आत्मानं प्रकटयन् विराजते। तेषां भेदः केवलं भाववर्णादिगतः। अतः भाववर्णादीनां वैशिष्ट्यम् एव विविधानां भगवत्-स्वरूपाणां वैशिष्ट्यम्। अपरतश्च, "सर्वे पूर्णाः शाश्वताश्च" इति शास्त्रवचनात् ज्ञायते, सर्वाणि एव भवगत्स्वरूपाणि नित्यानि, अतः तेषां स्वस्वभाव-वर्णादयः अपि नित्याः। तथा सति गौरवर्णस्य स्वयंभगवतः गौरवर्णः अपि नित्यः एव, न तु केवलं प्रकटनकालार्थम् आगन्तुकः, आगन्तुकत्वे नित्यत्वस्य व्याघातात्।

अथ च स्वयंभगवतः व्रजेन्द्रनन्दनस्य स्वरूपगतो वर्णस्तु —नवजलधरश्यामः। 'मेघाभं विद्युताम्बरम्' इत्यादि-गोपालतापनी-श्रुतिः अपि तत् एव ब्रवीति। एवं सति अयं गौरवर्णः कुतः आगतः ?

यस्मात् अय पीतवर्ण· गौरवर्णो वा नित्य, यस्मात् च अय वर्ण: गौरवर्णस्य स्वयभगवत स्वरूपे एव नित्यम् ·अवस्थितश्च, तस्मात् एतत् अवश्य स्वीकर्तव्य यत्, तथाविधम् एव किमपि वस्तु अस्य गौरवर्णस्य हेतुः भवेत्, यद् वस्तु स्वय भगवता सह अन्तरङ्गभावेन नित्यसम्बद्धम् । (पृ० ४३) केवल तस्य स्वरूपशक्ति· एव तेन सह अन्तरङ्गभावेन नित्यसम्बद्धा वर्तते । स्वरूपशक्ति विना अपर किम् अपि वस्तु तस्य स्वरूपे—विग्रहमध्ये न तिष्ठति । अत अस्य पीतवर्णस्य हेतु अपि स्वरूपशक्ति एव भवेत्, नान्यत् किमपि ।

स्वरूपशक्ति, द्विधा अवतिष्ठते—मूर्ता अमूर्ता च इति । अमूर्ता शक्तिस्तावत् शक्तिमत अभ्यन्तरे एव तिष्ठति, सर्वेषु एव भगवत्स्वरूपेषु इय तिष्ठति, अमूर्तशक्ते· (शुक्लत्वादि) वर्णसम्वन्धो नास्ति, अत अमूर्तशक्त्या कस्यापि भगवत्स्वरूपस्य "छन्नत्व" नोत्पद्यते ।

शक्ते मूर्त रूप पुन शक्त्यधिष्ठात्री देवता । मूर्ता स्वरूपशक्ति विभिन्नभगवत्स्वरूपाणा कान्तारूपेण सङ्गिनीरूपेण एव अवतिष्ठते । यथा वैकुण्ठाधिपते नारायणस्य वक्षोविलासिनी लक्ष्मीदेवी, यथा वा व्रजेन्द्रनन्दनस्य प्रेयसीशिरोमणि श्रीराधा इत्यादि । पूर्वम् एव उक्तम्—यत् राधा हि—सर्वशक्तिगरीयसी ह्लादिन्या परमसारभूत-मादनाख्यमहाभावस्वरूपिणी इति । सा च श्रीकृष्णस्य स्वरूपशक्तेः मूलभूत मूर्तरूपम्, स्वरूपशक्ते· मूलभूता अधिष्ठात्री देवता । लक्ष्मीदेवीप्रमुखा तु तस्या अशस्वरूपा । तथा च

सिद्धान्तरत्ने २।२२ अनुच्छेदधृतम् अथर्ववेदान्तर्गत-पुरुपबोधिनी-श्रुतिवाक्यम् । "यस्या अशे लक्ष्मीदुर्गादिका शक्ति. ।।" इति । मूर्ताया शक्ते अस्ति रूप वर्णश्च । अत एव मूर्तशक्ति एव वर्णदानविधानक्षमा । या मूर्तशक्ति यस्य भगवत्स्वरूपस्य कान्तारूपेण नित्यसङ्गिनी वर्तते, सा एव मूर्तशक्ति. तस्मिन् एव भगवत्स्वरूपे स्वीय वर्ण सक्रमयितु प्रभवति न तु अन्यस्मिन् भगवत्स्वरूपे, यत अन्येन केनचन भगवत्स्वरूपेण सह तस्या नित्यसङ्गित्व नास्ति । अनया दिशा (पृ० ४४) स्वय भगवत व्रजेन्द्रनन्दनस्य नित्यसङ्गिनी श्रीराधा एव व्रजेन्द्र-नन्दनाय स्वीय वर्ण दातु शक्नोति, न तु लक्ष्मी-प्रभृतय ।

अत्र तु अय सशय --कथम् एक अन्यस्मै स्व वर्ण दातु शक्नुयात् इति । वर्ण तु देहेन सह अविच्छेद्यतया सलग्न तिष्ठति , अत श्रीराधा कथ व्रजेन्द्रनन्दनाय स्व वर्ण दद्यात् ? अस्य इदम् उत्तरम्--श्रीराधा तावत् गौराङ्गी , मूर्तशक्ति इति कृत्वा एव तस्या अय गौरवर्ण , अमूर्ताया पुन कोऽपि वर्णो न तिष्ठति । अत एव श्रीराधा यदि स्वीय-मूर्तत्वस्य व्याघातमन्तरेण व्रजेन्द्रनन्दनस्य बहिरावरणविधया तेन सह एकत्व लब्धु शक्नुयात्, तर्हि एव सा व्रजेन्द्रनन्दन स्वीयेन वर्णेन समाच्छादयितु समर्था भवेत् । अथापि प्रश्न स्यात्--एक अन्येन सह अनेन प्रकारेण किम् एकीभवितु शक्नोति ? काम न शक्नोति, यदि तौ तत्त्वत भिन्नौ स्याताम् , पर पूर्वम् एव शास्त्रप्रमाणेन दर्शित--श्रीराधा व्रजेन्द्रनन्दनश्च न भिन्नौ, तौ एकात्मानौ, एकस्वरूपौ इति । एकस्वरूपतया एव पूर्वोक्तरूपेण तयो. एकत्वप्राप्ति न असम्भविनी इति ।

पुनश्च प्रश्न. स्यात्—श्रीराधा कथ श्रीकृष्णेन सह पूर्वोक्त-रूपेण एकत्वप्राप्ता भविष्यति ? अत्र उत्तरम्—श्रीराधा श्रीकृष्णस्य स्वरूपशक्ति , शक्तिमत सेवा एव शक्तेः केवल कार्यम्, एतत् एव च शक्ते शक्तित्वम् । श्रीराधाया अपि अद्वितीय कर्तव्य शक्तिमत श्रीकृष्णस्य सेवा, श्रीकृष्णस्य अभिलासपूरणम् । अत एव उक्तम्—श्रीराधा "कृष्णवाञ्छा-पूर्तिरूप करे आराधने । अतएव राधिकानाम पुराणे वाखाने । श्रीचै, च, १।४।४५ ॥"

श्रीकृष्णस्य कम् अभिलाष पूरयितु श्रीराधा श्रीकृष्णेन सह एकत्व प्राप्ता ? (पृ० ४५)

अस्य इदम् उत्तरम् । परब्रह्म श्रीकृष्ण रसस्वरूप "रसो वै स" इति श्रुते । रस-शब्दस्य तु द्वौ अर्थौ इति पूर्वम् एव उक्तम्—तत्राद्य. परमास्वाद्य रस, द्वितीयश्च परमास्वादक-रस, रसिकशिरोमणि इति यावत । रसघनविग्रहतया आनन्दघनविग्रहतया माधुर्यघनविग्रहतया च श्रीकृष्ण परमतम आस्वाद्य । स हि स्वकीयेन माधुर्येण सर्वचित्त-समाकर्षक, "पुरुष योषित् कि वा स्थावरजङ्गम । सर्वचित्तआकर्षक साक्षात् मन्मथमदन ॥ श्रीचै, च, २।८।११०॥" त्युक्ति च एतदनुकूला । तस्य माधुर्य "कोटिब्रह्माण्डपरव्योम, ताहा ये स्वरूगण बले हरे ता-सभार मन । पतिव्रताशिरोमणि, यॉरे कहे वेदवाणी, आकर्षये सेइ लक्ष्मीगण ॥ श्री चै० च, २।२१।८८॥" श्रीकृष्णस्य माधुर्यास्वादनलोभात् परव्योमाधि-पति नारायणः महाकालरूपेण कदाचित् कारणार्णवे वसन् द्वारकावासिन. कस्यचन विप्रस्य पुत्रान् जहार । यत तस्य

इयम् आशा बभूव, यत् ब्रह्मण्यदेव. श्रीकृष्णः द्विजपुत्रान् नेतुं नूनं महाकालपुरे आगमिष्यति, तदानी तस्य दर्शनं लब्ध्वा स स्वीयम् अभीष्ट पूरयितुं शक्नुयात् इति । वस्तुतः अपि तथा जातम्—अर्जुनेन सह श्रीकृष्ण यदा द्विजपुत्रान् अनुसन्धातुं महाकालपुरम् आगच्छत् तदा महाकालरूपी नारायणः एवम् आहस्म—

द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ।
कलावतीर्णाववनेर्भरासुरान हत्वेह भूयस्तरयेतमन्ति मे ॥
श्रीभा, १०।८९।५८

इति । श्रीकृष्णसेवाप्रलुब्धा सती वैकुण्ठेश्वरी लक्ष्मीदेवी यत् तीव्रा तपस्याम् अकरोत्, श्रीमद्भागवतात् तस्य अपि प्रमाणम् उपलभ्यते—

यद्वाञ्छया श्रीर्ललनाऽचरत् तपो
विहाय कामान् सुचिरं धृतव्रता ॥
श्रीभा, १०।१६।३ । (पृ० ४६)

केवलम् एतावत् एव न, "रूप देखि आपनार, कृष्णेर हय चमत्कार, आस्वादिते मने उठे काम । श्रीचै, च, २।२१।८६।" श्रीकृष्णस्य माधुर्यं "आत्मपर्यन्त-सर्वचित्तहर ॥ श्रीचै, च, २।२८।११२।" श्रीमद्भागवतम् अपि आह—"विस्मापनं स्वस्य च ३।२।१२ ॥" इति । निज रूप दृष्ट्वा श्रीकृष्णस्य विस्मयोद्रेकविवरण श्रीपाद-रूपगोस्वामिना दत्तम्—कदाचित् द्वारकायां मणिभित्तौ प्रतिफलित निजरूप दृष्ट्वा सविस्मयः श्रीकृष्णः सहसा व्याजहार :—

अपरिकलितपूर्वः कश्चमत्कारकारी
स्फुरति मम गरीयान् एष माधुर्यपूरः ।
अयमहमपि हन्त प्रेक्ष्य यं लुब्धचेताः
सरभसमुपभोक्तुं कामये राधिकेव ॥ ललितमाधव ८।३२ इति ।

यद् दृष्ट्वा विस्मयः समुत्पद्यते तस्य आस्वादनवासना नितान्तस्वाभाविकी ।

इत्थम् अवगतम्, स्वीयमाधुर्यस्य आस्वादनार्थं श्रीकृष्णस्य काचन बलवती लालसा वर्तते । व्रजेन्द्रनन्दनरूपेण स तस्य इमां लालसाम् अपूरयत् इति तु शास्त्रे न उपलभ्यते । एतेन ज्ञायते, व्रजेन्द्रनन्दनरूपेण तेन इयं वासना पूरयितुं न शक्या । अस्य कारणम् उच्यते । (पृ० ४७)

रसास्वादनम् एव रसिकशेखरस्य श्रीकृष्णस्य स्वरूपगत. स्वभावः । स्वरूपगतस्वभावतया च अप्रकटलीलायाम् अपि स रसस्य आस्वादन कुरुते, तथा ब्रह्माण्डे लीलाप्रकटनकाले अपि रसम् आस्वादयति । पुनश्च, उभयविधलीलाया तस्य परिवारान् अपि रसास्वादनं कारयति । द्विविधः खलु तस्य आस्वाद्यो रस —भक्तस्य प्रेमरसनिर्यासः स्वीयमाधुर्यरसश्च । भक्तस्य प्रेमरसनिर्यास. उत्सारितो भवति तस्य (श्रीकृष्णस्य) लीलायाम् ; तस्य परिकरभक्तैः सह अनुष्ठितायां लीलाया स तेषा परिकर-भक्ताना प्रेमरसान् आस्वादयति, परिकरभक्तान् च प्रेमरसास्वादन कारयति, परिकरभक्ता. स्वयम् अपि तस्य माधुर्यरसम् आस्वादयन्ति च ।

कृष्णविषयकः प्रेमा एव श्रीकृष्णमाधुर्यास्वादनस्य एक-मात्र उपायः ।

"पञ्चम पुरुषार्थ सेइ प्रेम महाधन ।
कृष्णर माधुर्यरस कराय आस्वादन ॥ श्रीचै, च, १।७।१३७ ॥"

यस्य अभ्यन्तरे अस्य प्रेम्ण. यावान् विकाशः, श्रीकृष्णमाधुर्यम् अपि स तावत् एव आस्वादयितु शक्नोति । श्रीकृष्ण-वचन-भङ्ग्या एव कविराजगोस्वामी तत् उक्तवान्—

"आमार माधुर्य नित्य नव नव हय ।
स्व स्व प्रेम-अनुरूप भक्त आस्वादय ॥
श्रीचै, च, १।४।११५ ॥" इति ।

श्रीराधाया मादनाख्य प्रेम एव प्रेमसु सर्वातिशायिविकाशमयं प्रेम , अत्र एव प्रेम्ण पूर्णतमो विकाश. , अत. श्रीराधा एव परिपूर्णभावेन श्रीकृष्णमाधुर्यम् आस्वादयितुं शक्नोति ; एतन्माधुर्यस्य आस्वादनजनित आनन्दश्च श्रीराधाया एव सर्वाधिक । श्रीराधा एव अस्य मादनस्य आश्रयः, कृष्णस्तु विषयमात्रम्, श्रीकृष्णे मादनस्य विकाशो नास्ति । लीलारस-वैचित्रीविधानार्थम् एव तथा भवति । ततश्च स्वीयमाधुर्य-रसस्य परिपूर्णरूपेण आस्वादन व्रजलीलाया श्रीकृष्णे न सम्भवति, न वा प्रकटाप्रकटलीलयो. (पृ० ४८) । प्रेम्णो विषयरूपेण श्रीराधिकादिपरिकरवर्गाणा सेवा लब्ध्वा, तेषां प्रेमरसनिर्यासम् आस्वाद्य च य आनन्द. प्राप्यते तस्य आस्वादन श्रीकृष्ण. व्रजलीलाया पूर्णरूपेण एव कृतवान्, परं तु प्रेम्ण आश्रयरूपेण श्रीराधिकादय. श्रीकृष्णस्य सेवा कृत्वा माधुर्यरसम् आस्वाद्य च यम् आनन्दं लभन्ते श्रीकृष्ण. तम् आनन्दम् उपभोक्तु न शक्नोति । अत एव तस्य परिपूर्णरूपेण स्वीयमाधुर्यरसस्य समास्वादनवासना अपूर्णा तिष्ठति । तस्य

माधुर्य परिपूर्णरूपेण समास्वाद्य श्रीराधा यम् अनिर्वचनीयम् अपरिसीमं च आनन्दं लभते, तस्याः सर्वेषु अङ्गेषु आविर्भवन्तं तस्य आनन्दस्य तरङ्गं दृष्ट्वा श्रीकृष्णो जानाति–प्रेम्णः विषयरूपेण स यादृशम् आनन्दं प्राप्नोति, ततः कोटिगुणितम् आनन्दं प्रेम्ण आश्रयरूपेण श्रीराधा अनुभवति इति। विषयस्य आनन्दापेक्षया आश्रयस्य आनन्दः अनन्तगुणाधिकः। श्रीकृष्ण एव कथितवान्–

"विषयजातीय सुख आमार आस्वाद।
आमा हैते कोटिगुण आश्रयेर आह्लाद॥ श्रीचै, च, १।४।११५॥
निज प्रेमास्वादे मोर हय ये आह्लाद।
ताहा हैते कोटिगुण राधाप्रेमास्वाद॥
श्रीचै, च, १।४।१५९॥" इति।

अनुदिनं श्रीराधाया अङ्गेषु श्रीकृष्णमाधुर्यस्य आस्वादनजनितम् आनन्दतरङ्गं पश्यतः श्रीकृष्णस्य स्वीयमाधुर्यास्वादनस्य अपूर्णा वासना घृताहुतिप्राप्ता अग्निशिखा इव धक् धक् इति ज्वलन्ती वर्तते। अनादिकालात् एव व्रजलीलायां श्रीकृष्णस्य इयम् अवस्था। यतः व्रजलीलायां स श्रीराधाया मादनस्य न आश्रयः, न युज्यते च आश्रयेण भवितुम्। कथम् इति चेत्? शृणु, नित्यव्रजलीलाया इदम् एव वैशिष्ट्यं यत् अत्र श्रीकृष्णः राधाप्रेम्णो विषयमात्रम्; अत्र लीलायां श्रीकृष्ण. प्रेम्णो विषयप्रधानो विग्रहः।

श्रीकृष्णो जानाति, यावत् स श्रीराधाप्रेम्णः अनाश्रयतया स्थास्यति तावत् तस्य स्वीयमाधुर्यास्वादनवासना पूर्णा न भवेत् इति। तेन श्रीराधा-(पृ० ४९) प्रेम्णः आश्रयत्वलाभाय

श्रीकृष्णस्य जायमाना बलवती वासना नितरां स्वाभाविकी । श्रीराधा अपि तद् जानाति । तथा च

"गोपिका जानेन कृष्णेर मनेर वाञ्छित ।
प्रेमसेवा-परिपाटी इष्टसमीहित ॥ श्रीचै, च, १।४।१७५"॥ इति।

लघुभागवतामृतधृते आदिपुराणे च—"मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम । जानन्ति गोपिकाः पार्थ नान्ये जानन्ति तत्त्वतः ॥" इति । श्रीकृष्णस्य मनोवासनाया. पूरणम् एव श्रीराधाया मुख्य कर्तव्यम् इत्युक्तम् । एतत् अपि सा जानाति यत् तस्या मादनाख्यप्रेम्ण अनाश्रयस्य श्रीकृष्णस्य इयम् अपूर्णा वासना न पूर्यते । एतदर्थं सा स्वीय मादनभावं श्रीकृष्णाय समर्पितवती । कथ समर्पितवती ?

पूर्वम् एव उक्तं श्रीराधा-श्रीकृष्णयोः तत्त्वत एकात्मत्वे सत्यपि मिलित्वा असत्याम् ऐक्यप्राप्तौ एकस्य भावम् अपरो ग्रहीतुं न शक्नुयात् इति। स्वीय मादनभाव श्रीकृष्णाय दातुम् एव श्रीराधा श्रीकृष्णेन सह मिलित्वा एकतां प्राप्ता । श्रीराधा स्वीयेन मादनाख्यप्रेम्णा, तथा स्वीयेन नवगोरोचना-गौरेण अङ्गेन श्यामसुन्दरस्य श्यामम् अङ्ग च समाच्छादित-वती ; एतेन श्यामसुन्दरो गौरसुन्दर सञ्जात –"त्विषाकृष्ण." —अन्तःकृष्ण. वहिर्गौर सञ्जात. ।

किन्तु, श्रीराधा स्वीय मूर्तत्वं—गौरवर्णम् अ-तिरोधाय कथङ्कारं स्वीयेन अङ्गेन श्रीकृष्णस्य सर्वाणि अङ्गानि समाच्छा-दितवती ? उज्ज्वलनील- (पृ० ५०) मणे· अस्य उत्तरं लभ्यते । गोवर्धनपर्वतस्य एकस्मिन् क्वचन कुञ्जे श्रीराधा-

कृष्णौ परस्परं माधुर्यरसास्वादने निमग्नौ आस्ताम् । उद्दीप्तः सात्त्विकभाव. तयोर्देहौ अलङ्कृतवान् । तयो. एता भाव-माधुरीम् अवलोक्य श्रीवृन्दादेवी श्रीकृष्णम् अवदत–

राधाया भवतश्च चित्तजतुनी स्वेदैर्विलाप्य क्रमाद्
युञ्जन्नद्रिनिकुञ्जकुञ्जरपते निर्धूतभेदभ्रमम् ।
चित्राय स्वयमन्वरञ्जयदिह ब्रह्माण्डभाण्डोदरे
भूयोभिर्नवरागहिङ्गुलभरै शृङ्गारकारुः कृती ॥

उ, नि, स्थायिभाव—।११०

इति । अनया उक्त्या ज्ञायते यत्, प्रेमपरिपाक. श्रीराधा-कृष्णयो· चित्तद्वय द्रवीकृत्य तथा एकम् अकरोत् यथा तयो-र्भेदभ्रम· अपि दूरीभूतो जातः । स महापराक्रान्त प्रेमा एव श्रीकृष्णप्रेममय्या श्रीराधाया अङ्गानि द्रवीकृत्य इव तस्याः प्रत्येकम् अङ्गै· श्रीकृष्णस्य प्रत्येक श्यामाङ्गानि आलिङ्गयन् श्याम गौरं कृतवान् । अयम् एव स्वयभगवतो गौरत्वहेतु· । एतेन एतत् अपि विज्ञात यत्—"कृष्णवर्ण त्विषाकृष्णं" इत्यादिश्लोके वर्तमानकले. उपास्यस्य यस्य भगवत्स्वरूपस्य कथा करभाजनेन ऋषिणा व्यतीते द्वापरे कथिता, तत् खलु (पृ० ५१) श्रीश्रीराधाकृष्णयो. ऐक्यप्राप्त स्वरूपम् । इदम् एव राधाभावद्युतिसुवलित कृष्णस्वरूपम् इत्यपि एतेनैव विज्ञातम् ।

---

## स्वयंभगवतः सन्न्यासित्वस्य शास्त्रीयप्रमाणम्

श्रीलकृष्णदास-कविराजगोस्वामी उपपुराणात् एकं प्रमाण तदीये श्रीश्रीचैतन्यचरितामृते उद्धृतवान् । यथा—

अहमेव क्वचिद् ब्रह्मन् सन्न्यासाश्रममाश्रितः ।
हरिभक्ति ग्राहयामि कलौ पापहतान् नरान् ॥

श्रीचै, च, १।३।१५ इति ।

स्वयं भगवान् श्रीकृष्ण क्वचन विशेषकलौ आविर्भूय सन्न्यास गृह्णाति आपामर सर्वान् जनान् (पापहतान् नरान्) हरिभक्ति (कृष्णविषयक प्रेम) ग्राहयति (प्रेमदान करोति) च—उद्धृतात् प्रमाणात् तद् विज्ञातम् ।

श्रीकृष्ण. व्यासदेवसमीपे पूर्वोक्त वचनम् उक्तवान् । व्यासदेव विगते द्वापरयुगे आविर्भूत आसीत् । अत. विगते द्वापरे श्रीकृष्ण यदा ब्रह्माण्डे अवतीर्णो वभूव तदा एव स व्यासदेवसमीपे पूर्वोक्त वचनम् उक्तवान् इति सुस्पष्ट ज्ञायते ।

श्रीकृष्ण स्वय भगवान्, स व्रजप्रेम दातु समर्थ. । अतीते द्वापरे यदा स. अवतीर्ण. तदा एव आपामर सर्वेभ्यो जनेभ्य. प्रेम कथ न दत्तवान् ? कथ तेन विशेषकले अपेक्षा कृता ? अस्य उत्तर मन्ये एव भवेत् । श्रीकृष्ण. प्रेम दातु समर्थ· पशुपक्षिवृक्षलतादिभ्य प्रेम दत्तवान् च, अत्र श्रीमद्-भागवतीयं "यद् गो-द्विज-द्रुम-मृगा पुलकान्यबिभ्रन्" इत्यादि वचनम् एव प्रमाणम् । पर द्वापरस्य व्रजलीलायां स. अखण्ड-प्रेमभाण्डागारस्य अधिकारी न आसीत्—इत्युक्त प्राक् ।

तदानीम् अखण्डप्रेमभाण्डागारस्य एकमात्राधिकारिणी आसीत् महाभावस्वरूपा प्रेमघनविग्रहा श्रीराधा देवी । अखण्डप्रेम-भाण्डागारस्य अधिकारिणा विना च, येन केनापि जनेन यस्मै कस्मैचित् निर्विचारेण व्रजप्रेमदान—विशेषतः समुन्नतोज्ज्वल-रसस्वरूप-कान्ताप्रेमदानं न सम्भवति । विशेषकलौ श्रीराधया सह एकत्वप्राप्तगौरस्वरूपेण यदा सः अवतीर्णो भवति, तदा एव स अखण्डप्रेमभाण्डागारस्य अधिकारी भवितुं शक्नोति, तदा एव स निर्विचारं यस्मै कस्मैचित् प्रेमदानं कर्तुं पारयति । एतदर्थम् एव विशेषकलौ प्रेमदानकथा व्याससमीपे तेन कथिता । (पापहतलोकेभ्यः प्रेमदानकथया एव निर्विचारम् आ पामरेभ्य. प्रेमदानकथा सूचिता भवति) ।

यदस्तु, उपपुराणात् उद्धृतेन प्रमाणेन ज्ञायते—विशेषकलौ आ पामरेभ्यो व्रजप्रेमदानार्थम् एव स्वय भगवान् अवतीर्णो भवति, अत्र एव अवतारे स सन्न्यासम् अपि गृह्णाति च इति । "कृष्णवर्णं त्विषाकृष्ण" इति श्लोकेन ज्ञातं विशेषकलौ स्वीय-माधुर्यास्वादनार्थम् एव स गौरवर्णः सन् अवतरति इति । एतेन—गौरवर्णस्य स्वयंभगवतः अवतारे स्वीयमाधुर्यास्वादनं स्वनिष्ठं फलम्, आ पामरेभ्यो व्रजप्रेमदानं पुन. तदवतारे जीव-निष्ठं फलम् (पृ० ५३) इति आयातम् । प्रेमदानं न तस्य स्वं फलम् इति हेतो तत् अवतरणस्य आनुषङ्गिकं बहिरङ्गं वा फलं वक्तुं शक्यते ।

गौरवर्णः स्वयं भगवान् सन्न्यासं गृह्णाति—इति महा-भारतात् अपि ज्ञायते । महाभारतस्य अनुशासनपर्वणि विष्णु-सहस्रनामस्तोत्रे दृश्यते—

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ॥९१
सन्न्यासकृच्छम. शान्तो निष्ठाशान्तिपरायण· ॥७५

इति। अर्धद्वयस्य अयम् अर्थ.—"कृष्ण" इति सु-वर्णद्वयं वर्णयति इति हेतो स सु-वर्णवर्ण", तस्य अङ्गं स्वर्णवत् गौरम् उज्ज्वल च इति कृत्वा स "हेमाङ्ग.", इतरजनापेक्षया तस्य अङ्गानि प्रशस्तानि इति स "वराङ्ग.", चन्दनाङ्गद परिदधाति इति स "चन्दनाङ्गदी", सन्न्यास गृह्णाति इति कृत्वा स "सन्न्यासकृत्—सन्न्यासी", भगवन्निष्ठवुद्धितया स "शम", अचञ्चलचित्ततया "शान्त", कृष्णभक्तिनिष्ठतया निवृत्तिपरायणतया च स "निष्ठाशान्तिपरायण." इति।

---

## गौरवर्णस्य स्वयंभगवतः भक्तभावे प्रमाणम्

कृष्णस्य नामगुणलीलादिकीर्तनं भक्तभावस्य परिचायकम्, यतः भक्त एव कृष्णनामादि कीर्तयति।

"कृष्णवर्णं त्विषाकृष्ण" इत्यादि भागवतीय-श्लोकस्य आलोचनया अवगत यत्, "कृष्णवर्ण" शब्दस्य एक अर्थ·— कृष्णं (कृष्णस्य नामरूपगुणादिक) यो वर्णयति स कृष्णवर्ण। तस्मात् श्लोकात् एतत् अपि ज्ञायते यत्, गौरवर्णः स्वय भगवान् एव कृष्णं वर्णयति इति। अत स भक्तभावमय.।

महाभारतोक्तस्य "सुवर्णवर्णो हेमाङ्ग" इत्यादिश्लोकस्य सुवर्णवर्ण-शब्देन अपि हेमाङ्गस्य (गौरवर्णस्य) भगवत· भक्तभाव·

सूचित. । अत्रत्य-"सुवर्णवर्ण"-शब्देन स्वर्णवर्णविशिष्ट इत्यर्थो न प्रतीयते, हेमाङ्गशब्देन पौनरुक्त्यापत्ते., अतः अत्र प्रथमवर्ण-शब्दः अक्षरपर., द्वितीय-वर्णशब्द क्रियापर. ; एतेन सु-वर्णं "कृष्ण" इति उत्तमाक्षरद्वय वर्णयति (कीर्तयति) यः स "सुवर्ण-वर्ण." एतावता अपि भक्तभावमय इत्येव अर्थ उपलभ्यते ।

महाभारतोक्ता. "सन्न्यासकृत् शम शान्त." इत्येते शब्दा अपि हेमाङ्गस्य भगवतो भक्तभाव सूचयन्ति ।

पूर्णतमभक्तभावमय्या श्रीराधया सह मिलनात् एव गौर-वर्णस्य स्वयभगवतो भक्तभाव । भक्तभावे एव श्रीकृष्ण-माधुर्यस्य आस्वादन सम्भवति ।

---

## श्रुतौ गौरवर्णः स्वयंभगवान्

मुण्डकोपनिषदि रुक्मवर्ण पुरुषम् अधिकृत्य किञ्चन वाक्यं दृश्यते—

यदा पश्य पश्यते रुक्मवर्ण
कर्तारमीश पुरुप ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जन परम साम्यमुपैति ॥ ३।१।३ (पृ० ५५)

अस्या श्रुतौ 'पश्य' शब्दस्य अर्थ. द्रष्टा । रुक्मवर्णः स्वर्णवर्ण. गौरवर्ण इति यावत् । "ब्रह्मयोनिम्" इत्यस्य ब्रह्मण. (निर्विशेषब्रह्मण ) मूलम् इत्यर्थः, स च स्वय भगवान् श्रीकृष्णः ; गीताया "ब्रह्मणोऽपि प्रतिष्ठाऽहम्" इति तेन एव

उक्तत्वात्, तत्रत्य'प्रतिष्ठा'शब्दस्य निदानम् इति अर्थः; योनि निदान मूलम् इति तुल्यार्थम्। निरञ्जनः मायालेप-शून्य निर्माय इति यावत्। विद्वान् ब्रह्मज्ञः। परब्रह्म श्रीकृष्ण ज्ञातुम् इच्छत भक्ति. अनन्य· उपाय, "भक्त्या मामभिजानाति" इति गीतोक्ते, "भक्तयाऽहमेकया ग्राह्य" इति भागवतोक्तेश्च। एव तर्हि 'विद्वान्' इत्यस्य भक्तिमान्, प्रेमभक्तिमान् इत्यर्थ।

उद्धृताया श्रुतौ कस्यचन रुक्मवर्णस्य गौरवर्णस्य वा भगवत्स्वरूपस्य समुल्लेखो लब्ध.। अय गौरवर्ण पुरुष· ब्रह्मयोनि–परब्रह्म स्वय भगवान् श्रीकृष्ण, पर तस्य वर्ण. बहिर्वर्ण कान्ति. वा स्वर्णवर्ण.। अस्मात् श्रुतिवाक्यात् अन्यत् अपि ज्ञात यत्–अस्य स्वर्णवर्णस्य पुरुषस्य दर्शनमात्रेण एव द्रष्टा पुरुष प्रेमभक्ति लभते, तस्य पापपुण्यात्मक सर्व कर्म–किम् अधिकम् अमरत्वम् अपि दूरीभवति, स सम्यक् मायामुक्तो भवति तेन स्वर्णवर्ण-पुरुषेण सह परम साम्य लभते च। अथ "परम साम्य लभते" इत्यस्य क अर्थ? 'द्रष्टा अपि स्वर्णवर्णपुरुष––परब्रह्म भवति' इति एक अर्थ. भवितुम् अर्हति, परम् अयम् अर्थ ग्रहणीयो न भवेत्। यत अणुचित् जीव कदापि विभुचित् परब्रह्म भवितु नार्हति। अन्य. अपि एक अर्थ भवितुम् अर्हति, स यथा–प्रभावेन परम साम्य लभते इति। तथा च, स्वर्णवर्ण-पुरुषस्य येन प्रभावेन तस्य दर्शनात् एव जीवा. (पृ० ५६)–पापात्मानो जीवा अपि तत्क्षणात् प्रेमभक्ति लभन्ते, तेन प्रभावेन सह द्रष्टा परम साम्य लभते, अर्थात् तस्य अपि दर्शनेन अपरे जीवा.

प्रेमभक्तिं लब्धु शक्नुवन्ति, सम्यक् मायामुक्ताः तथा विधौत-कर्माणश्च भवितुम् अर्हन्ति इत्यर्थः। एवंविधे अर्थे गृहीते सति शास्त्रीयसिद्धान्तेन सह विरोधो न भवति। अतः अयम् एव अर्थो ग्रहणीय.।

पूर्ववर्तिन्याम् आलोचनायाम् "अहमेव क्वचिद् ब्रह्मन्" इत्याद्युपपुराणप्रामाण्यात् अवगत यत् पापहतेभ्य. अपि लोकेभ्य. प्रेमभक्तिप्रदानार्थं स्वयं भगवान् विशेषकलौ अवतीर्णो भवति इति। "कृष्णवर्णं त्विषाकृष्णम्" इत्यादि-भागवतप्रामाण्यात् पुन. अवगत यत्, स विशेषकलौ अकृष्णवर्ण.—गौरवर्ण सन् अवतरति, तदा च स "साङ्गोपाङ्गास्त्रपार्षद" भवति—तस्य अङ्गानि उपाङ्गानि च अस्त्राणा पार्षदाना च कार्यं साधयन्ति, तस्य प्रेमभक्तिदानरूपस्य उद्देश्यस्य सिद्धौ सहायता कुर्वन्ति इत्यर्थं इति। अङ्गानाम् उपाङ्गानां दर्शनेन एव तस्य गौरवर्णपुरुषस्य श्रीमूर्तिदर्शनेन एव यदि कश्चित् प्रेम-भक्ति लभते, तर्हि एव ज्ञातव्य यत्, तस्य अङ्गप्रत्यङ्गानि तस्य अस्त्राणा पार्षदाना च कार्यं साधयन्ति इति। एतावता ज्ञात यत्, श्रीमद्भागवतीय—"साङ्गोपाङ्गास्त्रपार्षद" शब्दस्य यत् तात्पर्यं, मुण्डकश्रुत्युक्तस्य "यदा पश्य पश्यते रुक्मवर्णं पुरुषं × × ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय" इत्यादिवाक्यस्य अपि तद् एव तात्पर्यम्। अनेन श्रुतिवाक्येन सह भागवतादि-शास्त्रस्य सङ्गति. दृश्यते। अस्मात् श्रुतिवाक्यात् आधिक्येन एतत् अपि ज्ञायते यत्, अस्य गौरवर्ण-पुरुषस्य दर्शनेन यो जन. प्रेमभक्ति लभते, तस्य दर्शनेन अपि अपरे जना. तथाविधा प्रेमभक्तिं लभन्ते इति (पृ० ५७)।

## शास्त्रवाक्यालोचनस्य सारमर्म

एतत्पर्यन्तं नानाविधशास्त्रवाक्यानाम् आलोचनया यद् अवगतं तस्य सारमर्मं इदम् —

(१) श्रीराधा श्रीकृष्णस्य ह्लादिनीशक्ते मूर्तो विग्रह., अतः सा स्वरूपतो ह्लादिनी ।

(२) श्रीराधा श्रीकृष्ण च एकात्मानौ ।

(३) एकात्मानौ अपि श्रीराधा-श्रीकृष्णौ अनादिकालाद् गोलोके मूर्तिद्वयेन विराजत, लीलया विलसत. ।

(४) मूर्तिद्वयेन विराजितौ श्रीराधा-श्रीकृष्णौ एकत्वप्राप्तौ गौरवर्णस्वयभगवद्रूपेण विराजत. ।

(५) श्रीराधया सह एकत्वप्राप्तः श्रीकृष्णः श्रीराधाया भाव (प्रेम) कान्ति च अङ्गीकृत्य गौरवर्णः सञ्जात, अत एव स राधाभावद्युतिसुवलित श्रीकृष्णस्वरूपम् ।

(६) गौरवर्ण स्वयं भगवान् भक्तभावमयः ।

(७) यस्मिन् द्वापरयुगे व्रजेन्द्रनन्दन. श्रीकृष्ण. ब्रह्माण्डे अवतीर्णो भवति, तस्य अव्यवहितपरवर्तिनि कलियुगे (यद् विशेषकलियुगम् इति आख्यायते तत्र कलियुगे) स गौरवर्ण कृष्ण ब्रह्माण्डे अवतीर्णो भवति ।

(८) ब्रह्माण्डे अवतीर्णो गौरवर्णः स्वय भगवान् आपामरं सर्वेभ्य प्रेमभक्ति ददाति ।

(९) ब्रह्माण्डे अवतीर्णो गौरवर्णो भगवान् सन्न्यासम् अपि गृह्णाति (पृ० ५८) ।

(१०) गौरवर्णस्य भगवतो दर्शनेन एव पापी जीवः प्रमभक्ति लभते ।

(११) गौरवर्णस्य भगवतो दर्शनेन य. प्रमभक्तिं लभते, तस्य अपि दर्शनेन अपरे अपि तथाविधा प्रेमभक्तिं लभन्ते ।

(१२) तस्य गौरवर्णस्य स्वयंभगवत. स्वीयं स्वरूप-गतं कार्यं—श्रीकृष्णमाधुर्यास्वादनम् । यदा स ब्रह्माण्डे अवतीर्णो भवति, तदा स प्रेमभक्तिम् अपि वितरति ।

(१३) स गौरवर्णः स्वयं भगवान् वर्तमाने कलियुगे अवतीर्णो भविष्यति इति करभाजन ऋषिः अतीते द्वापरयुगे एव कथितवान् ।

एतावता विज्ञात यत्, "राधा कृष्णप्रणयविकृति." इत्यादिश्लोके श्रीपाद-स्वरूपदामोदरेण "राधाभावद्युति-सुवलित कृष्णस्वरूपम् अधिकृत्य राधाभावाविष्टं गौरवर्णं स्वयं-भगवन्त वा अधिकृत्य यद् यद् उक्तं तत् सम्यग्रूपेण शास्त्रसम्मतम् । शास्त्रबहिर्भूत किम् अपि नोक्तम् ।

श्रीपादस्वरूपदामोदरेण अन्यत् अपि उक्त यत्, स गौरवर्ण· स्वयं भगवान् वर्तमानकलौ अवातरत् इति, स च गौरवर्ण स्वयं भगवान् श्रीकृष्णचैतन्यदेव एव इति च इति ।

इदानी विचार्य द्रष्टव्य—चैतन्यदेव एव शास्त्रप्रसिद्धो गौरवर्ण· स्वय भगवान् न वा इति (पृ० ५९) ।

---

प्रतीतिः इयं यत्, स नन्दयशोदयोः पुत्र इति । नन्दयशोदाभ्यां सह श्रीकृष्णस्य सम्बन्धः केवलं दृढप्रतीतिनिबन्धनः न तु जन्मनिबन्धनः । श्रीकृष्णः (पृ० ६०) स्वैः परिकरैः सह एव ब्रह्माण्डे अवतीर्णो भवति । स आदौ पितरौ नन्दयशोदे अवतारयति, पश्चात् तयोः योगेन स स्वयम् अवतीर्णः भवति । पित्रोः शोणितशुक्राभ्यां मानवाना यथा जन्म भवति, न तथा श्रीकृष्णस्य जन्म । प्रथमत स पितुः हृदये ज्योतीरूपेण आनन्दरूपेण वा आविर्भूतो भवति, ततश्च इदं ज्योतिः आनन्दो वा मातुर्हृदये सञ्चारितं भवति। तदा प्रभृति च मातुर्देहे प्राकृतगर्भवत्या लक्षणं प्रकाश लभते । यथाकालं स मातु. देहात् नरबालकाकारेण स्वं प्रकटयति । अत एव जना मन्यन्ते—प्राकृतनरशिशोः यथा जन्म भवति, तस्य अपि तथैव जन्म जातम् इति, वस्तुतस्तु न तथा । "जन्म कर्म च मे दिव्यम्" इत्यादिगीतावाक्येन श्रीकृष्ण अर्जुनस्य समीपे तत् एव कथितवान् । श्रीकृष्णस्य गौरवर्णस्वरूपेण आविर्भाव. अपि अनेन प्रकारेण भवति ।

यद् भवतु, नरशिशुरूपेण अवतीर्णो भवति इति हेतोः ये भगवत्तत्त्वं न अवगच्छन्ति, ते स्वय भगवन्तम् अपि प्राकृतं मानव मन्यन्ते । एतत् श्रीकृष्ण. स्वयम् एव अर्जुनस्य समीपे उक्तवान्—

अवजानन्ति मा मूढा मानुषी तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ गीता ९।११ इति ।

एवंविधायाम् अवस्थाया मानुपाणां मध्ये अवतीर्णस्य भगवतः परिचयः अपि न सुकरः । अलौकिकशक्तिदर्शनमात्रेण

कल्पे (ब्रह्मणः एकस्मिन् दिवसे) सकृत् अवतीर्णो भवति। युगावतारः पुनः प्रतियुगम् अवतरति, (पृ ६२) तद् अपि सकृत् एव। यत्र युगे स्वयं भगवान् अवतरति, तस्य युगस्य अवतारः स्वयंभगवतः मध्य एव तिष्ठति, स स्वतन्त्रभावेन न स्वयभगवतः अवतरणसमये अपि अवतरति, न वा स्वयंभगवतः अन्तर्धानात् परम् अपि पुन तत्र युगे अवतरति।

यद् भवतु, श्रीमन्महाप्रभुः श्रीचैतन्यदेवः १४०७ शकाब्दे श्रीश्रीशचीजगन्नाथमिश्रयोगेन नवद्वीपे अवतीर्णो बभूव। स एव शास्त्रोक्तं "राधाभावद्युतिसुवलित-कृष्णस्वरूपं' न वा, गौरवर्णः स्वय भगवान् न वा, राधाकृष्णमिलितस्वरूपं न वा इत्येव तावत् विचार्यम्। पूर्वोद्धृतेभ्यः शास्त्रवाक्येभ्य गौरवर्णस्वयंभगवतो यानि लक्षणानि अवगतानि तानि चेत् श्रीचैतन्यदेवे वर्तन्ते, तर्हि एव स शास्त्रकथित-भगवत्स्वरूपतया गृह्येत नान्यथा। इदानीम् इमम् एव विषयम् अवलम्ब्य आलोचना क्रियते।

———

## (१) दैहिकलक्षणम्

यद्यपि जन्मलीलाद्वारा भगवान् मनुष्येषु अवतरति, तथापि केषुचित् शारीरिकलक्षणेषु साधारणमनुष्यापेक्षया तस्य किञ्चिद् वैशिष्ट्य वर्तते। श्रीमन्महाप्रभोः श्रीचैतन्यदेवस्य अपि ईदृश वैलक्षण्यम् आसीत्।

मानवदेह दैर्घ्ये स्वहस्तपरिमाणेन सार्धत्रिहस्तो भवति। विस्तारे—अपि तथैव सार्धत्रिहस्त.। विस्तारश्च—प्रसारितयोः भुजयो एकस्य मध्यमाङ्गुल्यग्रभागात् अन्यस्य मध्यमाङ्गुल्यग्रभागपर्यन्त। वर्तमानकल्पस्य ब्रह्मा अपि स्वहस्तपरिमाणेन सार्धत्रिहस्त। (पृ० ६३) तथा च भागवते ब्रह्मस्तुतौ ब्रह्मणा स्वयम् एव कथित—"सप्तवितस्तिकाय" (१०।१४।११) इति। 'वितस्ति' इति हस्तार्धम् उच्यते, यस्य 'विघत्' इति लौकिकी सज्ञा। यत् पुन चतुर्हस्त-(६ फिट) परिमितः अपि मानवः क्वचिद् दृश्यते, तत् लोकप्रचलितनिर्दिष्टमानापेक्षया, स्वहस्तापेक्षया तु सोऽपि सार्धत्रिहस्तपरिमित एव। भगवति पुनः नाय नियम। श्रीमद्भागवतीय- (१०।१४।११) श्लोकस्य वैष्णवतोषणीटीकायाम् उक्तम्, भगवद्विग्रह. सार्धचतुर्हस्तपरिमित इति। क्वचित् चतुर्हस्तपरिमाण. अपि श्रूयते। एव तर्हि यत् भगवत्स्वरूपं ब्रह्माण्डे अवतरिष्यति, मानववद् द्विभुज अपि तस्य देहो न सार्धत्रिहस्तपरिमित, अपि तु चतुर्हस्तपरिमित सार्धचतुर्हस्तपरिमितो वा भवति।

श्रीमन्महाप्रभोः श्रीचैतन्यदेवस्य अपि देहः दैर्घ्यविस्तारयो स्वहस्तमानेन चतुर्हस्त आसीत्। तथा च—

दैर्घ्य-विस्तारे येइ आपनार हाते ।
चारिहस्त हय महापुरुष विख्याते ॥
"न्यग्रोधपरिमण्डल" हय तार नाम ।
न्यग्रोधपरिमण्डल-तनु चैतन्य गुणधाम ॥ इति—

श्रीचै, च, १।३।३३-३४ ।

अत्रत्य "महापुरुष" शब्देन भगवान् एव बोध्यते । श्रीमद्भागवते (१०।४०।४) "महापुरुषमीश्वरम्" इति श्रीकृष्णं प्रति अक्रूरोक्तेः । एवम् एव "ध्येयं सदा परिभवघ्नम्" (११।५।३३) इत्यादि-भागवतश्लोके अन्यत्र अपि भगवान् एव महापुरुषशब्देन उक्तः ।

करचरणचिह्नादौ अपि मानुषापेक्षया भगवत्स्वरूपस्य वैलक्षण्यं वर्तते । महाप्रभोः श्रीचैतन्यदेवस्य अपि ईदृश वैलक्षण्यम् आसीत् । तस्य चरणे "शोभे (पृ० ६४) ध्वज वज्र शङ्ख चक्र मीन ॥ श्रीचै, च, १।१४।५॥" एतानि चिह्नानि कस्यचन मानवस्य चरणे न तिष्ठन्ति । शिशोः श्रीचैतन्यदेवस्य करपदचिह्नानि दृष्ट्वा तस्य मातामह. श्रीनीलाम्बरचक्रवर्ती कथितवान् ।—

नारायणेर चिह्नयुक्त श्रीहस्तचरण ।
एइ शिशु सब लोकेर करिबे तारण ॥ इति ।

श्रीचै, च, १।१४।१३॥

उल्लिखितात् लक्षणात् ज्ञायते, श्रीमन्महाप्रभु श्रीचैतन्यदेवः न जीवतत्त्वम् आसीत्; स तु ईश्वरतत्त्वं भगवत्स्वरूपम् । परम् ईश्वर-तत्त्वम् एव न स्वयं भगवान् । स्वयभगवतः तथाविधानि कानिचन लक्षणानि वर्तन्ते, यानि अन्यस्मिन्

कस्मिन् अपि भगवत्स्वरूपे न तिष्ठन्ति । एतेषां विशेष-लक्षणानां किञ्चन एकम् अपि लक्षणं क्वचन भगवत्स्वरूपे दृष्ट चेत् ज्ञातव्य—स स्वय भगवान् इति । श्रीचैतन्यदेवे स्वयंभगवतः किमपि विशेषलक्षणं वर्तते न वा, इति इदानी परीक्षितव्यम् ।

---

## (२) श्रीचैतन्यदेवे स्वयंभगवत्तालक्षणम्

पूर्वम् एव उक्तं वस्तुन. परिचयो विशेषलक्षणेन भवति न सामान्यलक्षणेन ।

स्वयंभगवत· अपि कानिचिद् विशेषलक्षणानि वर्तन्ते यानि अपरस्मिन् क्वचित् अपि भगवत्स्वरूपे न सन्ति । एतै विशेषलक्षणै एव स्वयभगवत· परिचयो भवितुम् अर्हति । सर्वाणि विशेषलक्षणानि सर्वदा न प्रकटीभवन्ति न वा लक्ष्यन्ते च । एकद्वानि लक्षणानि दृष्टानि चेत् (पृ० ५६) स्वयंभगवत. परिचय स्यात्; यतः, इमानि एकद्वानि विशेपलक्षणानि अपि स्वयभगवन्तं विहाय अन्यत्र भगवत्-स्वरूपे न तिष्ठन्ति ।

(क) स्वयभगवत. एक विशेषलक्षण तावत् एतत् यत्, तत्र अन्यानि भगवत्स्वरूपाणि सन्निविष्टानि इति । यत "एक. स. कृष्ण· निखिलावतारसमष्टिरूप." बृहद्-भागवतामृतम् । २।४।१८६ । लघुभागवतामृतस्य श्रीकृष्णा-मृतात् (३६८–७२) ज्ञायते—

स्युर्महान्तोऽतिपरम-महत्तमतया स्मृता ।
ते परव्योमनाथाश्च व्यूहाश्च वसुसख्यकाः ।।
वासुदेवादयो व्यूहाः परव्योमेश्वरस्य ये ।
तेभ्योऽप्युत्कर्षभाजोऽमी कृष्णव्यूहा सता मता. ।।
इत्येते परमव्योमनाथव्यूहै. सहैकताम् ।
स्वविलासैरिहाभ्येत्य प्रादुर्भावमुपागताः ।।
अशास्तस्यावतारा ये प्रसिद्धाः पुरुषादयः ।
तथा श्रीजानकीनाथनृसिहक्रोडवामना ।।
नारायणो नरसखो हयशीर्षाजितादयः ।
एभिर्युक्तः सदा योगमवाप्यायमवस्थित. ।। इति । ३६८-७२

श्रील-कृष्णदासकविराजगोस्वामी अपि एतत् एव उक्तवान्-

पूर्ण भगवान् अवतरे येइ काले ।
आर सब अवतार ताते आसि मेले ।।
नारायण चतुर्व्यूह मत्स्याद्यवतार ।
युगमन्वन्तरावतार यत आछे आर ।।
सभे आसि कृष्ण-अङ्गे हय अवतीर्ण ।
एंछे अवतरे कृष्ण भगवान् पूर्ण ।। इति । (क)
चै, च, १।४।९-११ ।

शचीनन्दने श्रीमन्महाप्रभौ स्वयभगवत्ताया यत् एतत् विशेषलक्षणं विद्यमानम् आसीत्, तत् तेन बहुषु स्थलेषु प्रदर्शितम् । तस्य दिगम्बर-शिशुदशायाम्, एकदा कश्चित्

(क) पूर्णस्वरूपस्य भगवतोऽवतरणकाले अपरे अप्यवतारास्तेन साक मिलिता भवन्ति । ते च—चतुर्व्यूहो नारायण मत्स्यादय युग-मन्वन्तरादयश्च । एतै सह पूर्णो भगवान् श्रीकृष्णोऽवतरति—इत्यस्य चैतन्यचरितामृतस्य तात्पर्यार्थ. ।

तैर्थिकः तीर्थं पर्यटन् नवद्वीपम् आगत्य जगन्नाथमिश्रस्य गृहे आतिथ्यं जग्राह। रात्रिकालः। मिश्रवरः तस्य रन्धनस्य व्यवस्थाम् अकरोत्; कृतरन्धनो विप्रः स्वीयेष्टदेवाय बाल-गोपालाय भोगं निवेद्य ध्यायन् आस्ते, तदानी सः अपश्यत्

सम्मुखे आइला प्रभु श्रीगौरसुन्दर।
धूलामय सर्व-अङ्ग मूर्ति दिगम्बर।
अरुण नयनकर चरण सुन्दर॥
हासिया विप्रेर अन्न लइया स्वकरे।
एकग्रास खाइलेन— ॥ इति। (क)

श्रीचैं, भा, आदि ३य अः

एतत् विलोक्य भोगो दूषित इति विचिन्त्य विप्रो हाहाकारं चकार। आगत्य जगन्नाथमिश्र. अपश्यत् बालक. भोगं भुञ्जान आस्ते, (पृ० ६७) हसति च। क्रोधावेशात् बालक प्रहर्तुम् उद्यत स तैर्थिकेन निवारित.। मिश्रस्य काकुवचसा विप्र. पुनरपि रन्धन स्वीचकार। विप्र पचन् आस्ते। चञ्चलो बालः बन्धुभिः प्रतिवेशिनो गृहे नीत.। पाकसमाप्तौ विप्र· पुनरपि भोग निवेद्य बालगोपाल ध्यायन् आस्ते, तदा—

मोहिया सकल लोक अति अलक्षिते।
आइलेन विप्रस्थाने हासिते हासिते॥

(क) धूलिजालसमावृतसर्वकायो दिगम्बरदेहो गौरसुन्दर. तदा तत्सम्मुखे समागत। तस्य कर-नयन-चरणम् अरुणवर्णम। हसन् प्रभु. विप्रेण निवेदितम् अन्न स्वकरेण गृहीत्वा ग्रासमेक भुक्तवान्।

अलक्षिते एकमुष्टि अन्न लइ कमृत।रे।
खाइया चलिला प्रभु—देखे विप्रवरे।। (क)

श्रीचै, भा, आदि ३य अः

पश्यन् विप्रः पुनरपि हाहाकारं चकार। बालको धावन् पलायाञ्चक्रे। कुपितो जगन्नाथमिश्रः यष्टिम् आदाय तम् अन्वधावत्। बालकः एकस्मिन् गृहे पलायितः अभवत्। वारद्वयम् एव भोग· अपवित्रीकृतः, अतिथेः विप्रस्य आहारो न जात.—इति विचिन्त्य सर्वे एव दु खिता बभूवुः। विप्रः कथितवान्—अहं प्रतितीर्थं भ्रमामि, न मे प्रत्यहम् अन्न भोज्यम् उपतिष्ठति। अद्य अपि भगवान् मह्यम् अन्नं न विहितवान् इति जाने। मा तावत् दु खिता भवन्तु भवन्त ; गृहे फलमूलादिक किञ्चिद् अस्ति चेत् ददतु, तद् एव भोक्ष्ये इति। तदा प्रभोः ज्येष्ठसहोदरो विश्वरूप. समुपस्थित. अभवत्। तस्य सौन्दर्येण मुग्धचित्तो विप्रः परिचयं जिज्ञासमानः ज्ञातवान्, अय जगन्नाथमिश्रस्य ज्येष्ठपुत्र इति। विश्वरूपस्य अनुनयेन विप्र· तृतीयवार रन्धनम् अनुमेने। चञ्चलः बालको गृहे अवरुद्ध कृत ; गृहद्वारे मिश्र· अवस्थित.। तदानीम् एकः अभूतपूर्वो व्यापार जात.। यत्र गृहे बालको रुद्ध, तस्य गृहस्य सर्वे, किमधिक द्वारस्थ· मिश्रवरः अपि—"सभेइ अचेष्ट निद्रा याय (सर्वे एव निश्चेष्टं निद्रान्ति)"। तदा—

---

(क) सर्वान् जनान् मोहयित्वा सर्वालक्षित. प्रभु. हसन् विप्र-समीपे समागत्य अन्नस्य एका मुष्ठि भुक्त्वा प्रातिष्ठत—इतीद विप्रः प्रत्यक्षीचकार।

ये स्थाने करेन विप्र अन्न निवेदन।
आइलेन सेइ स्थाने श्रीशचीनन्दन।।
वालक देखिया विप्र करे "हाय हाय"।
सभे निद्रा याये, केहो शुनिते ना पाय।।
प्रभु वोले "अये विप्र तुमि त उदार।
तुमि आमा डाकि आन, कि दोष आमार।।

मोर मन्त्र जपि मोरे करह आह्वान।
रहिते ना पारि आमि, आसि तोमास्थान।।
आमारे देखिते निरवधि भाव तुमि।
अतएव तोमारे दिलाम देखा आमि।।"

सेइक्षणे देखे विप्र परम अद्भुत।
शङ्ख, चक्र, गदा, पद्म, अष्टभुज-रूप।।
एक हस्ते नवनीत, आर हस्ते खाय।
आर दुइ हस्ते प्रभु मुरली वाजाय।।

श्रीवत्स कौस्तुभ वक्षे शोभे मणिहार।
सर्वअङ्गे देखे रत्नमय अलङ्कार।।
नवगुञ्जा वेढा शिखिपुच्छ शोभे शिरे।
चन्द्र मुखे अरुण अधर शोभा करे।।

हासिया दोलाय दुइ नयन कमल।
वैजयन्तीमाला दोले मकरकुण्डल।।
चरणारविन्दे शोभे श्रीरत्ननूपुर।
नखमणि-किरणे तिमिर गेल दूर।। (पृ० ६९)

अपूर्व कदम्ववृक्ष देखे सेइखाने।
वृन्दावन देखे नाद करे पक्षिगणे।।
गोप-गोपी गावीगण चतुर्दिगे देखे।
यत ध्यान करे, ताइ देखे परतेके।।

अपूर्व सौन्दर्य देखि सुकृती ब्राह्मण ।
आनन्दे मूर्च्छित हैया पड़िला तखन ॥ (क)

श्रीचै, भा, आदि, ३य अः

प्रभोः हस्तस्पर्शेन विप्रः चेतनां प्राप, वाक्यस्फूर्तिः न भवति, भूयोभूयो मूर्छितः सन् भूमौ पतति । देहे अश्रु-कम्प-पुलका दृश्यन्ते । प्रभोः चरणौ गृहीत्वा विप्रः उच्चैः क्रन्दितुम् आरभत । तस्य वैक्लव्यं दृष्ट्वा प्रभुः हसन् आह स्म—विप्र, त्वम् अनेकजन्म यावत् मां सेवसे । द्वापरयुगे मम नन्दगृहे अवतारकाले अपि त्वं तीर्थं भ्रमन् नन्दालये आगत्य मह्यं भोगं निवेदितवान्, अहं तत्काले अपि त्वद्दत्तम् अन्नं गृहीत्वा इदं रूपं दर्शितवान् ॥"

---

(क) यत्र विप्रो भक्तं निवेदयति, तत्र शचीनन्दनः समुपागत. । बालमागतं दृष्ट्वा विप्रो हाहाकार कर्तुमारेभे, पर सर्वे निद्रिता केऽपि तन्न शृण्वन्ति । प्रभुरवदत्—अये विप्र, त्व माम् आह्वयसि इति कृत्वा अहम् आगच्छामि, अत्र मम को दोष. । मन्मत्र जप्त्वा माम् आहूतवान्, अत एवाहं स्थातुमशक्नुवन् त्वत्समीपम् आगच्छामि । त्व सर्वदा मा द्रष्ट कामयसे इत्यह तुभ्य दर्शन दत्तवान् ।—तदात्वे एव विप्र. अद्भुत शङ्खचक्रगदापद्मधरम् अष्टभुज रूपम् अपश्यत् । एकेन करेण गृहीतं नवनीतम् अपरेण भक्षयति, अपरहस्ताभ्या च मुरली वादयति । श्रीवत्स-कौस्तुभमणिहारशोभि वक्षस्थलम्, सर्वाङ्गेषु रत्नालङ्कार नवगुञ्जा-वेष्टित शिखिपुच्छ शिरसि शोभते, अरुणाधरे चन्द्रमुखे हासचञ्चल नेत्रद्वयम् । वैजयन्तीमाला, मकरकुण्डले रत्ननूपुरञ्च । तत्र अपूर्वं नीपतरुम् अपश्यत्, गो-गोप-गोपीसमलङ्कृतं वृन्दावनञ्च आलोकितवान् । सुकृती विप्रः अपूर्वं सौन्दर्यम् आलोक्य आनन्देन मूर्छितोऽभवत् ।

इत्थं शचीनन्दनः तैर्थिक-ब्राह्मणाय यद् दर्शितवान्, तद् विना अपि तेन अनेकेभ्य. अनेकानि भगवत्स्वरूपाणि दर्शितानि। सन्न्यासात् प्राक् तेन शचीनन्दनदेहे एव रामसीतालक्षण-(चै, भा, मध्य ४०)मत्स्य-कूर्म-नृसिंहवामन-बुद्ध-कल्कि-श्रीकृष्ण-(चै, भा, मध्य २५, ८) नारायण-(चै, भा, मध्य २) वराह-(चै, भा, मध्य ३) विश्वरूप-(चै, भा, मध्य ६) शिव- (चै, भा, मध्य ८) वलराम- (चै, च, १।१७।१०९-११३) लक्ष्मी-रुक्मिणी-भगवती-(चै, भा, मध्य ८) प्रभृतीना भगवत्स्वरूपाणां रूपाणि दर्शितानि। नवद्वीपे श्रीमन्नित्यानन्दाय, सन्न्यासात् अनन्तर नीलाचले सार्वभौमभट्टाचार्याय राज्ञे प्रतापरुद्राय च स षड्भुज रूपम् अदर्शयत्। गोदावरीतीरे श्री-लरामानन्दरायः अपि प्रभो सन्न्यासिरूपस्थले श्रीश्रीराधाकृष्णरूपम् अपश्यत्। (विशेष, मूलकर्तु "श्रीश्रीगौरकरुणार वैशिष्ट्य" नाम्नि ग्रन्थे द्रष्टव्य)।



### (ख) स्वयंभगवत्ताया अपरं विशेषलक्षणं—प्रेमदातृत्वम्

स्वयभगवान् श्रीकृष्ण अनादिकालात् एव अनन्तभगवत्-स्वरूपरूपेण विराजितो वर्तते। सर्वम् एव भगवत्स्वरूपं जीवाना मङ्गलप्रदम्। परम्, श्रीकृष्ण विहाय अपर किञ्चन भगवत्स्वरूप प्रेमदानाय न अलम्। श्रीकृष्ण मानुषेभ्य एव प्रेमदानाय अलम् इति न, स लतागुल्मादिभ्य·—यावत् स्थावर-जङ्गमेभ्य एव प्रेम दातु समर्थः।

सन्त्ववतारा बहवः पुष्करनाभस्य सर्वतो भद्राः ।
कृष्णादन्यः को वा लतास्वपि प्रेमदो भवति ॥

इति लघुभागवतामृत-पूर्वखण्डात् (५।३७) ।

स्वयंभगवत्ताया एतत् लक्षणम् अपि श्रीमन्महाप्रभौ श्रीचैतन्यदेवे अतिप्रकटतया वर्तमानम् आसीत् । 'प्रेमदाता' इति तस्य महती ख्यातिः । श्रीपादरूपगोस्वामी तम् इत्थं वन्दितवान्—

नमो महावदान्याय कृष्णप्रेमप्रदाय ते।
कृष्णाय कृष्णचैतन्यनाम्ने गौरत्विषे नमः ॥

साधनभजनापेक्षां पात्रापात्रविचारं च अकृत्वा सः आपामर-साधारणेभ्यः किम् अन्यत् महापापिभ्यः अपि प्रेम (पृ० ७१) ददौ । तस्य इमं प्रेमदातृत्वगुणम् अभिलक्ष्य श्रीलकृष्णदास-कविराजगोस्वामी तं भक्तिकल्पतरुतया, भक्तिकल्पतरो रक्षक-पोषक-मालाकारतया च वर्णयामास । तस्य कृपावारिसेचनेन अस्य कल्पतरोः सर्वाङ्गे कृष्णप्रेमरूपं फलं फलति स्म, स तत् फलं वितरति स्म । तथा च—

श्रीचैतन्य-मालाकार पृथिवीते आनि ।
भक्ति-कल्पतरु रुपिला सिञ्चि इच्छा-पानि ॥

* * * * * * *

उडुम्बर वृक्षे यैछे फले सर्व-अङ्गे ।
एइ मत भक्ति-वृक्षे सर्वत्र फल लागे ॥

* * * * * * *

पाकिल ये प्रेम-फल अमृत-मधुर ।
विलाय चैतन्य-माली नाहि लय मूल ॥

ত্রিজগতে যত আছে ধনরত্ন-মণি ।
এক ফলের মূল্য করি তাহা নাহি গণি ॥
মাগে বা না মাগে কেহো—পাত্র বা অপাত্র ।
ইহার বিচার নাহি, জানে "দিব" মাত্র ॥
অঞ্জলি অঞ্জলি ভরি ফেলে চতুর্দিশে ।
দরিদ্র কুডায়ে খায় মালাকার হাসে ॥ (ক)

শ্রীচ, চ, ১।৯।৭, ২৩, ২৫-২৮

कल्पतरुः याचितम् एव ददाति, अयाचित न ददाति । श्रीचैतन्यमहाप्रभु पुनः अपूर्वः कल्पतरु । "मागे वा ना मागे" (याचता मा वा याचतां) (पृ० ७२) सर्वेभ्य एव स प्रेम ददाति—-यत् प्रेम ब्रह्मादीनाम् अपि दुर्लभ, यत्र प्रेम्णि लुब्धः ब्रह्मा अपिं प्रेमप्राप्तिहेतुभूतैः गोकुलवासिना चरणरजोभिः आत्मानम् अभिषेक्तुं सत्यलोकं परित्यज्य गोकुलारण्ये तृण-गुल्मादियोनौ अपि आत्मजन्म कामयामास । तथा च "तद् भूरि भाग्यमिह जन्म किमप्यटव्या यद् गोकुलेऽपि कतमाङ्घ्रि-रजोऽभिषेकम्" (भा० १०।१४।३४) इति ।

---

(क) चैतन्य-मालाकृत् भक्ति-कल्पतरु पृथिवीमानीय इच्छा-जलेन सिक्त्वा रोपितवान् । * * * उडुम्बरवृक्षा यथा सर्वाङ्गेषु फलति एव भक्ति-वृक्षस्य अपि सर्वत्र फलानि जायन्ते । * * * यत् अमृतमधुर प्रेम-फल पक्व तत् चैतन्यमाली वितरति, मूल्य पुनर्न गृह्णाति । त्रिजगति यावन्तो धनरत्नमणय. सन्ति ते एकस्यापि फलस्य मूल्यत्वेन न गण्यन्ते । याचकोऽयाचको वा, पात्रम् अपात्र वा इति विचारो नास्ति, 'दास्यामी'ति-मात्र जानाति । चतुर्दिक्षु अञ्जलिशो विक्षिपति , दरिद्राः सगृह्य भुञ्जते, मालाकृत् हसति ।

सन्न्यासात् पूर्वं नवद्वीपावस्थानकाले प्रभुः जगाइ-माधाइ इत्येताभ्यां—यौ श्रीवासपण्डितस्य वस्त्रसीवनकारकौ यवनौ आस्ता—श्रीवासपण्डितस्य चतुर्वर्षीयभ्रातुष्पुत्रैच नारायणीदेव्यै, अपरेभ्य अपि बहुभ्यः कृष्णप्रेम दत्त्वा तान् उन्मत्तान् अकरोत् । सन्न्यासग्रहणात् परं वृन्दावनगमनक्रमेण पथि झारिखण्डस्य भिल्लप्रायान् लोकान् अपि कृष्णप्रेम दत्त्वा कृतार्थयामास । वृक्षलता. पशुपक्षिणः—स्थावरजङ्गमा—सर्वान् एव स नामप्रेम दत्त्वा धन्यान् अकरोत् । प्रभुमुखात् कृष्ण-नाम श्रुत्वा झारिखण्डस्य व्याघ्रमृगहस्त्यादयः अपि कृष्णप्रेम्णा ननृतु, तेषाम् अपि मुखे कृष्णनाम स्फुरितम् अभवत् । स्वयं भगवान् श्रीकृष्णः "लतास्वपि प्रेमदो भवति" इति यदुक्त झारिखण्डस्य पथि प्रभु. तत् प्रमाणीकृतवान् । भारतस्य दक्षिणस्या पश्चिमाया च दिशि भ्रमणकाले कृष्णनाम शिक्षयन् प्रभु. सख्यातीतान् लोकान् प्रेमाप्लुतान् चकार । प्रभो. दर्शन-मात्रेण एव जना कृष्णप्रेम लब्धा बाह्यस्मृतिरहिता. अश्रु-कम्प-पुलकादिभि व्याप्ता. "कृष्ण कृष्ण" इति शब्द कुर्वन्तः जहसुः रुरुदु. ननृतु. जगु. । पुनरपि आश्चर्य यत्, प्रभो. दर्शनेन येषाम् ईदृशी अवस्था सञ्जाता, तेषां दर्शनेन अपरेषाम् अपि तथा-विधा अवस्था जाता, एव तेषाम् अपि दर्शनेन अन्येषाम्, इति । इत्थं प्रभु. "यदा पश्य पश्यते रुक्मवर्ण कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा ( पृ० ७३ ) विद्वान् पुण्यपापे विधूय निरञ्जन. परमं साम्यमुपैति ॥" इति मुण्डकश्रुते. यथार्थतां स्फुटं प्रकटयामास ।

(प्रभो. प्रेमदानविषये विशेषसमालोचनं मलकर्तुः "श्रीश्री

गौरकरुणार वैशिष्ट्य" नाम्नि ग्रन्थे "प्रेमवितरणे करुणार वैशिष्ट्य" नामके प्रवन्धे द्रष्टव्यम् )।

उल्लिखित-स्वयंभगवत्ताया. द्वे विशेषलक्षणे एव शचीनन्दन-श्रीचैतन्यदेवस्य स्वयंभगवत्ता प्रमापयत.।

शास्त्रप्रोक्तानि अन्यानि लक्षणानि अपि यत् श्रीचैतन्यदेवे विद्यमानानि आसन् तत् इदानी दर्शयिष्यते।

---

## (३) शास्त्रकथितानि अन्यानि लक्षणानि

कलियुगे अवतीर्णस्य स्वयभगवत अन्यानि यानि लक्षणानि शास्त्रे श्रूयन्ते, तानि अपि सर्वाणि श्रीचैतन्यदेवे विरेजुः।

(क) गौरवर्ण । श्रीमद्भागवतस्य "कृष्णवर्णं त्विपाकृष्णं" इत्यादिश्लोकात् ज्ञातं, वर्तमानकलौ उपास्यतया अवतरिष्यत. यस्य कथा विगते द्वापरयुगे एव करभाजनऋषिः कथितवान् तस्य वर्ण "अकृष्ण—पीतः भविष्यति" इति। श्रीमद्भागवतस्य "आसन् वर्णा" इत्यादिश्लोकात् अपि ज्ञायते, विशेषकलौ अवतरतः स्वयभगवतः वर्णः अपि "पीत."। महाभारते अपि भगवतः "हेमाङ्गः" इति एक नाम प्राप्यते। "पीतः" "हेमाङ्ग" इति शब्दद्वयम् एकम् एव अर्थं सूचयति, स च अर्थः—स्वर्णवत् उज्ज्वल-गौरवर्ण. इति ( पृ० ७४)।

शचीनन्दन-श्रीचैतन्यदेवस्य वर्णः अपि उज्ज्वल-गौरः आसीत् ।

तथि लागि पीतवण चैतन्य अवतार ।

तप्त हेम-समकान्ति प्रकाण्ड शरीर। श्रीच, च, १।३३१-३२

इति चैतन्यचरितामृतात् ।

पदकर्ता च गीतवान्—

"अपरूप गोरातनु, कषितकाञ्चन जनु ।" इति ।

एतस्मात् एव श्रीचैतन्यदेवः—गौर', गौरसुन्दरः, गौरहरिः, गौरकृष्णः, गौरभगवान् इत्यादिभिः नामभि. अभिधीयते ।

(ख) कलौ अवतरणम् । श्रीमद्भागवते लिखितम् "अकृष्णः—गौरवर्ण." स्वयं भगवान् अस्मिन् वर्तमानकलौ अवतरिष्यति । पूर्वोक्तात् उपपुराणात् अपि ज्ञायते—पाप-हतेभ्यो जनेभ्यः प्रेम वितरितुं स्वय भगवान् विशेषकलौ एव अवतरति ।

श्रीमन्महाप्रभुः श्रीचैतन्यदेव' वर्तमानकलौ १४०७ शकाब्दे अवतीर्णः बभूव । गते द्वापरे श्रीकृष्णः अवततार इति हेतोः वर्तमान. कलिः अपि विशेषकलिः ।

(ग) सन्न्यासः । उपपुराणे उक्तम्—स्वय भगवान् श्रीकृष्णः प्रेम वितरितुं विशेषकलौ अवतीर्णः सन् सन्न्यासं गृह्णाति ।

श्रीमन्महाप्रभुः गौरसुन्दरः अपि १४३१ शकाब्दीय-माघ-मासस्य अन्तिमदिवसे पौर्णमास्या तिथौ 'काटोया' इत्याख्ये स्थाने श्रीपाद-केशवभारतीसकाशात् सन्न्यासं जग्राह ( मूलकर्त्रा

सम्पादितस्य गौरकृपातरङ्गिणी-टीकासम्वलितस्य श्रीश्रीचैतन्य-चरितामृत-तृतीयसस्करणस्य परिशिष्टे "श्रीमन् महाप्रभुर सन्न्यास ग्रहणेर तारिख" शीर्षकप्रवन्धो द्रष्टव्य )। सन्न्यास-काले एव तस्य "श्रीकृष्णचैतन्य" इति नाम प्रकटितम्। श्रीकृष्णचैतन्यस्य एव संक्षेप "श्रीचैतन्य" इति (पृ० ७५)।

(घ) **भक्तभावः।** श्रीमद्भागवतात् महाभारतात् च ज्ञातं—गौरवर्णस्य स्वयभगवतो हृदये भक्तभावः प्रकटितः।

श्रीमन्महाप्रभौ श्रीकृष्णचैतन्ये अपि भक्तभाव प्रकटित. आसीत्। भक्तभावदशाया स कृष्णभक्त इव श्रीकृष्णस्य नामकीर्तन (सख्यानिर्णयपूर्वक नामकीर्तनम् अपि ) चकार। श्रीकृष्णस्य रूप-गुन-लीलादीनाम् अपि श्रवण-वर्णन-कीर्तन चकार। श्रीमद्भागवतीय-"कृष्णवर्ण" शब्दस्य, महाभारतीय-"सुवर्णवर्ण" शब्दस्य च सार्थकता महाप्रभौ दृष्टा। तथा च—

'कृष्ण' एइ दुइ वर्ण सदा याँर मुखे।
अथवा कृष्णके तेँहो वर्णे निजमुखे॥
"कृष्णवर्ण" शब्देर एइ दुइत प्रमाण।
कृष्ण विनु ताँर मुखे नाहि आइसे आन॥

श्रीचै, च १।३ ४२-४३।

(ङ) **महाभारतोक्तानि अन्यानि लक्षणानि।** "हेमाङ्गस्य" भगवत अपरापराणि लक्षणानि अधिकृत्य पूर्वोद्धृतमहाभारतवाक्येन ज्ञायते—स वराङ्ग. चन्दनाङ्गदी शमः शान्तः निष्ठाशान्तिपरायण' इति।

श्रील-कविराजगोस्वामी अपि श्रीमन्महाप्रभुम् एवं वर्णितवान्—

दैर्घ्य-विस्तारे येइ आपनार हाथे ।
चारि हस्त हय महापुरुष विख्याते ॥
"न्यग्रोधपरिमण्डल" हय तार नाम ।
न्यग्रोधपरिमण्डल-तनु चैतन्य गुणधाम ॥
आजानुलम्बित भुज—कमललोचन ।
तिलफुल जिनि नासा—सुधांशुवदन ॥
शान्तदान्त कृष्णभक्तिनिष्ठापरायण ।
भक्तवत्सल सुशील सर्वभूते सम ॥ (पृ० ७६)
चन्दनेर अङ्गद-वाला, चन्दनभूषण ।
नृत्यकाले परि करेन कृष्णसङ्कीर्तन ॥
एइ सब गुण लञा मुनि वैशम्पायन ।
सहस्र नामे कैल ताँर नामेर गणन ॥ (क) श्रीचै, च, १।३।३३-३८

पूर्ववर्तिनि द्वितीये अनुच्छेदे ये द्वे लक्षणे उल्लिखिते, ते द्वे एव श्रीमन्महाप्रभोः स्वयंभगवत्ताया लक्षणे। पूर्ववर्तिनोः प्रथम-तृतीययोः अनुच्छेदयोः आलोचितानि लक्षणानि पुनः आनुषङ्गिकाणि साधारणानि वा लक्षणानि, न तु विशेष-लक्षणानि । द्वितीये अनुच्छेदे आलोचितेन लक्षणेन एव ज्ञायते—श्रीमन्महाप्रभुः स्वयं भगवान् आसीत् इति । स यद् गौरवर्ण

(क) यः स्वहस्तमानेन दैर्घ्य-विस्ताराभ्यां चतुर्हस्तः स महापुरुष इत्याख्यायते "न्यग्रोधपरिमण्डल" इति चोच्यते । चैतन्यो न्यग्रोधपरिमण्डलदेहः । भुजौ आजानुलम्बिनौ, कमलवल्लोचने, तिलपुष्पजित्वरी नासा, चन्द्रवद् वदनम्, शान्तो दान्तः कृष्णभक्तिनिष्ठापरायणः, भक्तवत्सलः सर्वभूतेषु समः, सुशीलः । चन्दनाङ्गदं चन्दनभूषणं च परिगृह्य नृत्यकाले कृष्णसङ्कीर्तनं करोति। वैशम्पायनो मुनिः एतान् गुणान् अधिकृत्य सहस्रनामस्तुतौ तस्य नाम गणयामास ।

अपि आसीत् तद् अपि दर्शितम् । तस्य अयं गौरवर्णः किं-हेतुक, इति इदानीम् आलोच्यते । गौराङ्ग्या श्रीराधया सह एकत्वप्राप्तिरेव तस्य गौरवर्णत्वस्य हेतुः ।

———

## श्रीचैतन्यः—श्रीश्रीराधाकृष्णमिलितस्वरूपम्

पूर्वोद्धृतस्य श्रीमद्भागवतीयस्य "कृष्णवर्णं त्विषाकृष्णं" श्लोकस्य आलोचनावसरे उक्त, वर्तमानकले. उपास्य गौर-वर्ण स्वय भगवान् राधाकृष्णमिलितस्वरूपम् इति ।

श्रीमन्महाप्रभु श्रीचैतन्यदेव. न केवल स्वकीयं स्वय-भगवत्तालक्षणम् एव प्रकटीकृतवान् परं स्वकीय राधाकृष्ण-मिलितस्वरूपम् अपि स गोदावरीतीरे रामानन्दरायस्य समीपे प्रकाशितवान् (पृ० ७७) ।

प्रभु यदा दक्षिणभारतभ्रमणार्थं बहिर्गत तदा गोदावरी-तीरे विद्यानगरे राय-रामानन्देन सह मिलित आसीत् । रामानन्द ओडिष्याप्रदेशस्य तदानीन्तन-स्वाधीन-हिन्दुनरपते. राज्ञ प्रतापरुद्रस्य अधीनस्य 'राजमहेन्द्री' विभागस्य शासनकर्ता आसीत् । विषयकार्यव्यापृत अपि स परमभागवतो महाप्रेमिको महापण्डित कृष्णभक्तिरसज्ञश्च बभूव । महाप्रभु. तत्र कस्यचन वैष्णवब्राह्मणस्य गृहे वसति स्म, रामानन्द सन्ध्यायाम् आगत्य तेन सह मिलित अभवत् । काञ्चित् रात्री प्रभु तेन सह साध्य-साधनतत्त्वस्य आलोचनाम् अकरोत् । अस्याम् आलो-चनाया प्रभु श्रोता आसीत्, रामानन्दो वक्ता ।

प्रभोः एकः स्वभाव आसीत् यत्, मन्ये भक्तभावमयतया स प्रायः सर्वदा एव आत्मगोपन कर्तुम् अचेष्टत इति । "छन्नः कलौ" । परं प्रेमिकस्य भक्तस्य समीपे भगवत आत्मगोपन-प्रयासः प्रायशो न सत् चैतन्य भवति । प्रेमवान् भक्तः प्रेमशक्त्या आत्मगोपनचेष्टितं भगवन्तं परिचिनोति ।

"लुकाइते नारे कृष्ण भक्तजनस्थाने" श्रीच, च, १।३।७१ ॥

रामानन्देन सह आलोचनासमये अपि प्रभुः आत्मगोपनार्थम् अचेष्टत । तथापि असाधारणस्य प्रेम्ण. प्रभावेन रामानन्दः अन्तरान्तरा प्रभोः स्वरूपम् उपलब्धवान् इव । प्रभो· स्वरूप रामानन्दस्य प्रेमाञ्जन-परिष्कृतयोः नेत्रयोः समीपे कदा कदा विस्फुरितम् इव अभवत् ; परं तत् क्षणिकम्—स्फूर्तिप्राप्तं तत् स्वरूपं क्षणात् इव अन्तर्हितम् अभूत् । दिग्भ्रान्तिकारकम् आलोकम् (आलेया) इव प्रभोः स्वरूप रामानन्दः अपश्यत् । तस्य एतत् कारणं यत्, रामानन्द. आलोचनामध्ये एव तस्य स्वरूपम् अनुभवतु—इति प्रभुः न इच्छति । एव सति आलोचना न चलेत् इति (पृ० ७८) ।

यद्यपि राय प्रेमी महाभागवते ।
रायेर मन कृष्णमाया नारे आच्छादिते ॥
तथापि प्रभुर इच्छा परम प्रवल ।
जानि तेहो रायेर मन हैल टलमल ॥ (क)

श्रीचै, च, २।८।१०२-३

---

(क) यद्यपि राय प्रेमी महाभागवतश्च, रायस्य चित्तं यद्यपि कृष्णमाया आच्छादयितुं न शक्नोति, तथापि प्रभोरिच्छा सुतरा प्रवला, अतो ज्ञातवतोऽपि रायस्य चित्तं सशयितमभूत् ।

यद् अस्तु, आलोचने अवसिते रामानन्द स्व रूपं दर्शयितुं प्रभो. इच्छा जाता । एकदा रामानन्दः गत्वा प्रभुम् अनमत् । स प्रणामकाले सन्न्यासिन प्रभुम् अपश्यत्, पर प्रणामान्ते उत्थाय तेन दृष्ट , प्रभो. सन्न्यासिरूपस्थले अन्यत् एकम् अपूर्वं रूपम्—यत् कमलनयन श्यामसुन्दरं वशीवदन च ; अस्य समीपे काञ्चनप्रतिमासदृशी श्रीराधा, श्रीराधाया अङ्गकान्त्या श्यामसुन्दरस्य सर्वाणि अङ्गानि समाच्छादितानि । दृष्ट्वा रामानन्दस्य मनसि सशय जागरित । तेन प्रभो समीपे स्वीयः सशय अकपटम् उक्त. । प्रभो,

एक सशय मोर आछये हृदये ।
कृपा करि कह मोरे ताहार निश्चये ॥
पहिले देखिलुँ तोमा सन्न्यासिस्वरूप ।
एवे तोमा देखि मुञि श्यामगोपरूप ॥
तोमार सम्मुखे देखों काञ्चन-पञ्चालिका ।
तार गौरकान्त्ये तोमार सर्व-अङ्ग ढाका ॥
ताहाते प्रकट देखि सवशीवदन ।
नानाभावे चञ्चल ताहे कमलनयन ॥
एइ मत तोमाँ देखि हय चमत्कार ।
अकपटे कह प्रभु ! कारण इहार ॥ (क) श्रीचै, च, २।८।
२२०–२४ (पृ० ७९)

---

(क) एक सशयो मम हृदये वर्तते, कृपया तस्य निश्चय ब्रूहि । पूर्वं त्वा सन्न्यासिरूपम् अद्राक्षम् इदानी पुन श्याम-गोपरूप पश्यामि । तव सम्मुखे काञ्चनपञ्चालिकामेका पश्यामि, तस्या गौर-कान्त्या तव सर्वाणि अङ्गानि आवृतानि । तत्र सवंशीक-वदनं नानाभाव-चञ्चलं कमलनयन च पश्यामि । एव त्वाम् आलोक्य आश्चर्यं जायते, अस्य कारणम् अकपटं ब्रूहि ।

भूयः अपि प्रभुः आत्मगोपनार्थम् अचेष्टत। इयं चेष्टा रसपुष्ट्यर्थम्। प्रकटसौन्दर्यापेक्षया प्रच्छन्न-सौन्दर्यस्य माधुर्यम अधिकं भवति। रामानन्दस्य वचनं श्रुत्वा—

प्रभु कहे कृष्णे तोमार गाढ प्रेम हय।
प्रेमेर स्वभाव एइ जानिह निश्चय॥
महाभागवत देखे स्थावर-जङ्गम।
ताहाँ ताहाँ हय ताँर श्रीकृष्ण-स्फुरण॥
स्थावरजङ्गम देखे, ना देखे तार मूर्ति।
सर्वत्र हय निज इष्टदेव स्फूर्ति॥
राधाकृष्णे तोमार महाप्रेम हय।
याहाँ ताहाँ राधाकृष्ण तोमारे स्फुरय॥ (क)

श्रीचै, च, २।८।२२५–२८

रामानन्द, तव प्रेमप्रभावात् एव त्वम् एवं पश्यसि। अहं सन्न्यासी एव नान्यः कोऽपि। स्थावरजङ्गमेष्वपि दृष्टिपात कुर्वता त्वया प्रेमप्रभावात् स्वेष्टदेवौ श्रीश्रीराधाकृष्णौ एव द्रष्टव्यौ।

इदानी तु रामानन्दः प्रभोः कपटेन न भ्रान्तः। प्रभोः कृपया रायस्य चेतसि प्रभोः स्वरूपानुभवः समजायत। स उवाच—

———तुमि प्रभु छाड़ भारिभुरि।
मोर आगे निजरूप ना करिह चुरि॥

---

(क) प्रभुर्वदति, कृष्णे तव प्रगाढं प्रेम, प्रेम्णश्चाय स्वभावः यत् स्थावरजङ्गमं पश्यति, तस्य मूर्तिं तु न पश्यति, सर्वत्र स्वेष्टदेव-स्फुरणं भवति। राधाकृष्णयोस्ते महान् प्रेमा, अत यत्र तत्र तव राधा-कृष्णौ स्फुरत.।

राधिकार भावकान्ति करि अङ्गीकार ।
निज रस आस्वादिते करियाछ अवतार ॥
निज गूढ कार्य तोमार प्रेम आस्वादन ।
आनुषङ्गे प्रेममय कैले त्रिभुवन ॥ (पृ० ८०)
आपने आइले मोरे करिते उद्धार ।
एवे कपट कर, तोमार कोन् व्यवहार ॥ (क)

श्रीचै, च, २।८।२२९-३२

रामानन्दस्य वचनं श्रुत्वा प्रभु ईषत् अहसत्, हसित्वा रामानन्द स्व रूपम् अदर्शयत् । तथा च—

तवे हासि प्रभु तारे देखान स्वरूप ।
रसराज महाभाव दुह एकरूप ॥—श्रीचै, च, २।८।२३३

प्रभु. रामानन्दराय निज स्वरूपं यद् अदर्शयत् तत्तु—रसराजमहाभावयोः मिलित किञ्चन रूपम् । रसराजस्तु—अखिलरसामृतवारिधि शृङ्गाररसराजमूर्तिधर· श्रीकृष्णः । महाभाव पुन—महाभावस्वरूपा महाभावस्य मूर्तो विग्रहः श्रीराधिका । अत· "रसराजमहाभाव दुइ एकरूप" इति श्रीश्रीराधाकृष्णमिलितविग्रह· । इदम् एव प्रभोः स्वरूपम् ।

राय-रामानन्द· प्रभो· इदं स्वरूपं दृष्ट्वा आनन्दस्य आधिक्येन मूर्छित· भूमौ पपात । तथा च—

---

(क) प्रभो, त्व वञ्चना परिहर, ममाग्रे स्व रूपं मा गोपय । राधिकाया भावं कान्ति च स्वीकृत्य निजं रसम् आस्वादयितुम् अवतीर्णवानसि । प्रेमास्वादन तव गूढं स्वकर्म, अनुषङ्गत· पुनस्त्रिभुवन प्रेममयम् अकरो । माम् उद्धर्तुं स्वयम् उपागतोऽसि, इदानी पुन· कपटतां करोषि इति कोऽयम् आचार· ?

देखि रामानन्द हैला आनन्दे मूर्छिते ।
धरिते ना पारे देह—पड़िला भूमिते ॥ श्रीचै, च, २।८।२३८

प्रभो करस्पर्शेन रामानन्दस्य मूर्छाभङ्गो जातः । तदा सः अपश्यत् स एव सन्न्यासी इति, "रसराज महाभाव दुइ एकरूप" इदानी नास्ति । रामानन्दः विस्मय गत. । प्रभुः तम् आलिङ्ग्य आश्वस्त कृत्वा यत् स्वरूपं तम् अदर्शयत् स्वेन वदनेन तस्य परिचयम् अपि ददौ (पृ० ८१) ।

गौर अङ्ग नहे मोर राधाङ्ग स्पर्शन ।
गोपेन्द्रसुत विना तेँहो ना स्पर्शे अन्यजन ॥

श्रीचै, च, २।८।२३८

रामानन्द, मम स्वम् अङ्ग स्वतो न गौरवर्णम्, तथापि यन्मा गौरवर्ण पश्यति जन तत्र राधाङ्गस्पर्शन हेतु । श्रीराधापि गोपेन्द्रसुत विना नान्यं कम् अपि स्पृशति ।

भङ्ग्या प्रभु' वक्ति—स व्रजेन्द्रनन्दन. श्रीकृष्ण इति । अतः तस्य स्वीयो वर्ण.—नवजलधरश्याम', न तु गौरः । गौराङ्गी राधा प्रेमविगलिता स्वेन प्रत्यङ्गेन तस्य प्रतिश्यामाङ्ग स्पृशती (आलिङ्ग्य) वर्तते इति कृत्वा स (श्यामसुन्दर') गौरसुन्दर. सञ्जात ।

प्रभु अन्यत् अपि उवाच—

ताँर भावे भावित आमि करि आत्ममन ।
तवे निज माधुर्य रस करि आस्वादन ॥

श्रीचै, च, २।८।२३९

श्रीराधाभावेन (मादनाख्यमहाभावेन) स्वीयम् आत्मानं (देहं) मन. (मनस उपलक्षकतया इन्द्रियाणि) च भावयन्

(परिषिञ्चन्) अहं (व्रजेन्द्रनन्दन. श्रीकृष्णः) स्वं माधुर्यरसम् आस्वादयामि ।

किमर्थं श्रीकृष्ण श्रीराधया सह मिलित्वा—एकत्व प्राप्य गौर सञ्जात, प्रभु तदपि वक्ति—आत्मन. (कृष्णस्वरूपस्य) माधुर्यरसास्वादनार्थम् एव स श्रीराधया सह एकत्वं प्राप्तवान् इति ।

पूर्वम् एव उक्तम्—स्व माधुर्य सम्पूर्णरूपेण आस्वादयितु श्रीकृष्णस्य वलवती वासना समुदेति, पर श्रीराधाया मादनाख्य–(पृ० ८२) महाभावस्य आश्रयत्वम् अलभमानस्य तन्न सम्भवति, श्रीराधाप्रेम्ण. आश्रयीभवन च श्रीराधया सह एकत्वम् अलभमानस्य दुर्लभ भवति । एतदर्थम् एव श्रीकृष्णः श्रीराधया सह एकत्व प्राप्तवान् तेन च तस्य श्यामम् अङ्ग श्रीराधाया गौराङ्गस्य अन्तराले प्रच्छन्नम् अभवत्—कृष्णवर्ण श्रीकृष्ण कान्त्या अकृष्ण (त्विषाकृष्ण) अभवत्, अन्त कृष्ण बहिर्गौर सञ्जात । वहिर्वत् अन्तरपि श्रीकृष्णस्य चित्त श्रीराधाप्रेम्ण आश्रय सञ्जातम्, अनेन च प्रेमरसेन तस्य चित्तम् इन्द्रिय देह—सर्वम् एव सम्यक् निषिक्त वर्तते, अत एव स श्रीराधा इव स्व माधुर्यम् आस्वादयितु शक्नोति ।

पूर्वोक्तविवरणात् श्रीश्रीगौरस्वरूपस्य अन्यत् अपि वैशिष्ट्य विज्ञात—तच्च गौरस्य माधुर्यवैशिष्ट्यम् ।

"रसराज महाभाव दुइ एक रूप"

इत्यस्य दर्शनात् पूर्वम् एव रायरामानन्द श्यामसुन्दर-वंशी-वदनस्य समीपे काञ्चन-पञ्चालिकासदृशी श्रीराधाम् अपश्यत् ।

श्रीराधासान्निध्येन तदानी श्यामसुन्दर-श्रीकृष्णस्य मदनमोहन-रूपम् एव प्रकटितम् अभूत् , यतः

"राधासङ्गे यदा भाति तदा मदनमोहन" इति ।

अस्य मदनमोहनरूपस्य दर्शनेन अपि रामानन्दः नूनम् अपरिसीमम् आनन्दम् अनुबभूव । किन्तु तदानीम् अपि स न मूर्छित आसीत् । एतेन प्रतिभाति मदनमोहनरूपदर्शनजनिताम् आनन्दोन्मादना सवरीतु शक्तिः रामानन्दस्य आसीत् । परं स यदा प्रभो स्वरूप—

"रसराज महाभाव दुइ एक रूप"

दृष्टवान्, तदा आनन्दाधिक्येन स मूर्छितः अभवत् । एतेन च प्रतिभाति—इमा राधाकृष्णमिलितस्वरूपस्य दर्शनजनिताम् आनन्दोन्मादनां सवरीतु शक्तिः रामानन्दस्य न आसीत् । अत एव

"रसराज महाभाव दुइ एक रूप"

इत्यत्र मदनमोहनरूपापेक्षया अपि अधिकतरः कश्चित् अनिर्वचनीय-माधुर्यविकाशो विस्पष्टम् (पृ० ८३) अवबुध्यते ।

"रसराज महाभाव दुइ एक रूप"

इत्यत्रैव रसस्वरूपस्य परब्रह्मणः स्वयंभगवतः स्वरूपगत-माधुर्यस्य पूर्णतमो विकाशः ।

माधुर्यघनविग्रहस्य अपि श्रीकृष्णस्य माधुर्य बहि अभिव्यक्तं—तरङ्गायित कर्तु केवलं परिकर-भक्तस्य प्रेम एव शक्नोति । यत्र प्रेम्णो यावान् विकाशः तस्य सान्निध्ये माधुर्यस्य अपि तावान् विकाश. सम्भवति । श्रीराधायां प्रेम्णः सर्वातिशायी विकाशः इति हेतोः श्रीराधाया. सान्निध्ये एव श्रीकृष्ण-

माधुर्यस्य अपि सर्वातिशायी विकाश.—मदनमोहनरूपस्य विकाशः—सम्भवति । तथा श्रीराधायाः सान्निध्यं यथा यथा घनिष्ठ भविष्यति माधुर्यस्य विकाश. अपि तथा तथा अधिको भविष्यति । पर व्रजे श्रीराधा-कृष्णयो. सान्निध्य यावद् वा घनिष्ठं भवतु, तयो. देहौ पुन. पृथक् एव । "रसराज महाभाव दुइ एक रूप" इत्युक्तप्रकारे रूपे सान्निध्य तथा घनिष्ठ तथा निविडं यथा तयो. भेदः एकान्तत एव विलुप्त', तौ एकतां प्राप्तौ । अत तस्मिन् रूपे श्रीकृष्णस्य माधुर्य पूर्णतमरूपेण—मदनमोहनरूपेण—विकशित भविष्यतीत्यत्र सहजा मति. एव प्रमाणम् ।

पुनश्च, श्रीराधासान्निध्येन श्रीकृष्णस्य माधुर्यं यथा वर्धते, तदिद वर्धित-माधुर्य दृष्ट्वा श्रीराधाया प्रेम अपि तथा वर्धितुम्—उच्छ्वसित भवितुम् आरभते, एव श्रीराधाया इदम् उच्छ्वसित प्रेम एतत्प्रेमजनिता श्रीराधाया अङ्गे तरङ्गायिताम् आनन्दलहरी च दृष्ट्वा श्रीकृष्णस्य वर्धित माधुर्य भूयो वर्धितुम् आरभते । श्रीकृष्णस्य माधुर्य श्रीराधायाः प्रेम आनन्दलहरी च परस्पर-स्पर्धया इव वर्धितुम् आरभन्ते । सेयं वार्ता कविराज-गोस्वामिना श्रीकृष्णमुखादेव प्रकाशिता ।

मन्माधुर्य राधाप्रेम दोँहे होड करि ।
क्षणे क्षणे वाढे दोँहे केह नाहि हारि ॥

श्रीचै, च, १।४।१२४

"सुतरा रसराज महाभाव दुइ एक रूप"-श्रीश्रीगौरसुन्दरे श्रीकृष्णमाधुर्यस्य पूर्णतमो विकाश. अस्ति, भूयश्च अस्ति—आत्मपर्यन्तसर्वचित्तहारी स्वय श्रीकृष्णः अपि यस्या रूपं दृष्ट्वा

मुग्धो भवति तस्या राधायाः माधुर्यस्य पूर्णतमो विकाशः, उभयो. सान्निध्यहेतुक. परस्परस्पर्धया वर्धनशील: उभयोर्माधुर्यविकाशश्च। अत एव अस्य अपूर्व-रूपस्य माधुर्यम् अनिर्वचनीयम्, अतुलनीयम्, मन्ये स्वयं मदनमोहनस्य अपि मनोमोहनम्। श्रीजीवगोस्वामी स्वीये सन्दर्भे कथितवान्—युगलित-राधाकृष्णपरमस्वरूपम् इति। अस्मिन् "रसराज महाभाव दुइ एकरूपे" एव तयो युगलितत्वस्य चरमतमो विकाशः। मन्ये अत एव श्रीपाद-स्वरूपदामोदरेण उक्तम्—

"न चैतन्यात् कृष्णाज्जगति परतत्त्वं परमिह" इति।

शक्ति-शक्तिमतो मिलनादेव स्वरूप जायते। यत्र स्वरूपे शक्ते विकाश यावान् अधिक, तस्य स्वरूपस्य महिमा अपि तावान् प्रभूत। व्रजेन्द्रनन्दने श्रीकृष्णे सर्वशक्ते पूर्णतमो विकाश। किन्तु तस्य स्वरूपे केवलम् अमूर्तशक्तेः एव पूर्णतमो विकाश। पूर्वम् एव उक्त यत् शक्ते. अवस्थितिः द्विधा भवति, मूर्ततया अमूर्ततया च। व्रजलीलायां श्रीकृष्णे मूर्तशक्ति नास्ति, मूर्तशक्ति पुन श्रीराधारूपेण श्रीकृष्णस्य बहि.प्रदेशे वर्तते। अथ च "रसराज महाभाव दुइ एक रूप" दशायां श्रीकृष्णस्य मूर्तशक्ते. अमूर्तशक्ते. च एकस्मिन् रूपे सम्मिलनम्। तस्मात् अस्मिन् रूपे स्वरूपमहिम्न· पूर्णतमो विकाश। अत्र एव च स्वरूपे परम-स्वरूपत्वस्य अपि पूर्णतमो विकाशः। स्वरूपदामोदर तस्य पूर्वोद्धृते वचसि अस्य एव तत्त्वस्य सूचनं कृतवान्।

"न चैतन्यात् कृष्णाज्जगति परतत्त्वं परमिह"—श्रीपाद-स्वरूपदामोदरस्य अस्या उक्ते. तात्पर्यम् अन्यथापि विवेचनम्

अर्हति । श्रुत्या परब्रह्म "आनन्दस्वरूपं—आनन्दं ब्रह्म" "रस-स्वरूपं—रसो वै स, सर्वरस." च उक्तम् । आनन्दशब्देन रसशब्देन च माधुर्यम् एव सूच्यते । (पृ० ८५) अत. माधुर्यम् एव परब्रह्मत्वस्य सार प्राणवस्तु वा इति अनायास ज्ञायते । सर्वशक्तिसमन्वितं परब्रह्म एव अद्वयज्ञानतत्त्व स्वय भगवान् इत्यत्रापि न सन्देह । "ओ परब्रह्म गोपाल. ओ" इत्यादि श्रुतिवाक्ये, "यत्रावतीर्णं कृष्णाख्य परब्रह्म नराकृति" इत्यादिविष्णुपुराणवाक्ये "पर ब्रह्म पर धाम" इत्यादिगीता-वाक्ये च स्वयं भगवान् श्रीकृष्ण एव परब्रह्मतया कथित. । श्रीमद्भागवते अपि "कृष्णस्तु भगवान् स्वय" इत्युक्तम् । अतो माधुर्य भगवताया. परब्रह्मत्वस्य परतत्त्वस्य च सार. इत्यपि ज्ञायते । एवञ्च, यत्र माधुर्यस्य सर्वातिशायी विकाश. तत्र स्वयभगवत्ताया परतत्त्वस्य च सर्वातिशायी विकाश इत्यत्रापि नास्ति सन्देह । श्रीचैतन्यरूपे कृष्णे—"रसराज महाभाव दुइ एकरूपे" माधुर्यस्य सर्वातिशायिविकाशतया एव उक्त—"न चैतन्यात् कृष्णाज्जगति परतत्त्व परमिह" इति ।

यद् भवतु, श्रीश्रीगौरसुन्दर श्रीश्रीराधाकृष्णयो. सम्मिलितं स्वरूपम् इति राय-रामानन्देन प्रत्यक्षीकृतम् । श्रीपाद-रूप-गोस्वामिन कस्माच्चन वाक्यात् प्रतीयते यत् तेन अपि इद स्वरूपम् उपलब्धम् । तेनोक्तम्—

अपारं कस्यापि प्रणयिजनवृन्दस्य कुतुकी
रसस्तोम हृत्वा मधुरमुपभोक्तुं कमपि य. ।
रुचं स्वामावव्रे द्युतिमिह तदीया प्रकटयन्
स देवश्चैतन्याकृतिरतितरा न कृपयतु ॥

इति ।—यः प्रणयिजनवृन्दस्य (मध्ये) कस्यापि (राधायाः) अपारं मधुरं कम् अपि रसस्तोमम् उपभोक्तुं तदीयां (राधा-सम्बन्धिनी) द्युति प्रकटयन् (आत्मनि प्रकाशयन्) स्वां रुचम् (कृष्णकान्तिं) आवव्रे (आवृतवान्) चैतन्याकृतिः स देवः (श्रीकृष्णः) नः (अस्माकं) अतितरां कृपयतु (अस्मासु कृपा-परो भवतु) (पृ० ८६) ।

श्रीमन्महाप्रभोः अन्तरङ्गपार्षदाना मध्ये अपरे अपि केचन अस्य "रसराज महाभाव दुइ एकरूप" इत्यस्य अनुभव न लब्धवन्त. इति न । श्रीपादस्वरूपदामोदरः इदं रूपम् अनुभूय एव "तद्द्वयञ्चैक्यमाप्तं राधाभावद्युतिसुवलितं नौमि कृष्ण-स्वरूपम्" इति उक्तवान् इति मन्ये ।

रायरामानन्द. प्रभोः यत् स्वरूपं दृष्टवान् तत्तु "राधा-द्युतिसुवलित कृष्णस्वरूपम्" इति स्पष्ट ज्ञायते । तच्च "राधा-भावसुवलितं कृष्णस्वरूपम्" इति पुनः प्रभो. स्वोक्त्या एव ज्ञायते ।

तार भावे भावित आमि करि आत्ममन ।
तवे निज माधुर्य रस करि आस्वादन ॥ श्रीचै, च, २।८।२३९



## राधाभावसुबलितत्वम्

श्रीश्रीराधा-कृष्णयो. एकत्वप्राप्त्या श्रीकृष्णकर्तृकं श्री-राधाया. कान्तिग्रहण यथा सूच्यते, तथा भावग्रहणम् अपि सूच्यते । वस्तुतः अपि स्वीयमाधुर्यास्वादनार्थं श्रीकृष्णेन श्रीराधाया भावग्रहणम् एव मुख्यरूपेण आवश्यकम् । एतद्-भावग्रहणार्थम् एव श्रीराधया सह तस्य एकत्वप्राप्ति· (पृ० ८७) एकत्वप्राप्त्या च कान्तिग्रहणम् ।

तार भावे भावित आमि करि आत्ममन ।
तवे निज माधुर्य रस करि आस्वादन ॥

इति वाक्येन गौरसुन्दररूप श्रीकृष्ण स्वमुखेन एव यद् राधा-भावग्रहण व्यक्तीकृतवान्, तत् पूर्वकृतया आलोचनया विज्ञातम् ।

श्रीराधाया भावग्रहणात् तस्य भावस्य आवेशेन गौरकृष्णः स्व श्रीराधाम् एव मन्यते, श्रीराधा यथा श्रीकृष्ण स्वप्राणकान्त मन्यते तद्वत् राधाभावाविष्टो गौरकृष्ण स्वय कृष्ण. सन् अपि व्रजेन्द्रनन्दन-श्रीकृष्ण स्वप्राणवल्लभ मन्यते ।

राधिकार भावे प्रभुर सदा अभिमान ।
सेइ भावे आपनाके हय "राधा" ज्ञान ॥ श्रीचै, च, ३।१४।१३
गोपी भाव याते प्रभु धरियाछे एकान्त ।
व्रजेन्द्रनन्दने माने आपनार कान्त ॥—श्रीचै, च, १।१७।२७०

राधिकाया मादनाख्य-महाभावग्रहणात् प्रभो अन्त.करण श्रीराधाभावेन सह तथा निविड़तया तादात्म्यप्राप्तं यथा प्रभो-राचरण दृष्ट्वा प्रतीति जायते—श्रीराधाया भाव एव मूर्ति परिगृह्य प्रभो अन्त करणरूपेण परिणत इति । श्रीराधाया

अन्त करणे श्रीकृष्णम् अधिकृत्य यो यो भाव उदेति प्रभोः अन्त.करणे अपि स स भावः उदितो भवति । श्रीकृष्णेन सह मिलनेन श्रीराधाया यः अनिर्वचनीय. सुखोदयो भवति श्रीकृष्णेन सह मिलनोत्साहेन राधाभावाविष्टस्य प्रभोः मनसि अपि तादृश. सुखोदयो भवति। पुनश्च, श्रीकृष्णस्य विरहे श्रीराधायाः चित्ते यथा तीव्रस्य दु खस्य उदयो भवति, श्रीकृष्णविरहिताया श्रीराधाया भावाविष्टस्य प्रभोः अपि मनसि तादृशम् असह्य दु खम् उदेति । (पृ० ८८)

राधिकार भावमूर्ति प्रभुर अन्तर ।<br>
सेइ भावे सुखदु ख उठे निरन्तर ॥श्रीचै. च, १।४।९३

श्रीकृष्णस्य विरहे श्रीकृष्णप्रेरितस्य उद्धव-दूतस्य दर्शनेन च श्रीराधाया यथा दिव्योन्माद. प्रकाशित अभूत् श्रीकृष्ण-विरहभावावेशेन प्रभु. अपि तथा दिव्योन्मादं प्रकटीकृतवान् ।

शेष-लीलाय प्रभुर कृष्ण विरह-उन्माद ।<br>
भ्रममय चेष्टा, प्रलापमय वाद ॥<br>
राधिकार भाव यैछे उद्धव-दर्शने ।<br>
सेइ भावे मत्त प्रभु रहे रात्रि दिने ॥(क) श्रीचै, च १।३।९४-९

राधाभावाविष्टस्य प्रभो आचरणम् आलोच्यते ।

---

(क) अन्तिमलीलाया प्रभो कृष्णविरहोन्माद, भ्रममयी चेष्टा, प्रलापमयी उक्तिश्च । उद्धवदर्शनेन श्रीराधाया यादृशो भाव आसीत्, प्रभु अहोरात्र तेन भावेन मत्तस्तिष्ठति ।

## श्रीकृष्णस्य माधुर्यम् अपूर्णा वासना च

कृष्णनाम, कृष्णगुण, कृष्णलीलावृन्द ।
कृष्णेर स्वरूपसम सब चिदानन्द ॥
ब्रह्मानन्द हैते पूर्णानन्द लीलारस ।
ब्रह्मज्ञानी आकर्षिया करे आत्मवश ॥
ब्रह्मानन्द हैते पूर्णानिन्द कृष्णगुण ।
अतएव आकर्षये आत्मारामेर मन ॥(क)

श्रीचै, च, २।१७।१३०-३२ (पृ० ८९)

(१) श्रीकृष्णस्य स्वरूपं यथा चिदानन्दमयम् एवम् अस्य नामगुणलीला अपि चिदानन्दा, अत एव परममधुरा. सर्वचित्ताकर्षकाश्च । श्रीशुकदेवगोस्वामी आदौ ब्रह्मानन्दरसेन तन्मय आसीत्; श्रीकृष्णलीलारसेन आकृष्ट तस्य चित्तं ब्रह्मानन्दात् निवृत्तम्, न पुन. प्रत्यावृत्तम् ।

स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽ-
प्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।
व्यतनुत कृपया यस्तत्त्वदीप पुराण
तमखिलवृजिनघ्न व्याससूनु नतोऽस्मि ॥ श्रीभा, १२।१२।६९

श्रीकृष्णस्य गुणसमह. अपि तथा मधुरः तथा सर्वचित्ताकर्षकश्च यथा आत्मारामा मुनिगणा अपि तेन गुणसमूहेन आकृष्टाः कृष्णे अहैतुकी भक्ति कुर्वन्ति ।

---

(क) कृष्णनाम, कृष्णगुणाः कृष्णलीलावृन्द च—सर्वं कृष्णस्वरूपमिव चिदानन्दमयम् । चिदानन्दापेक्षयापि लीलारस पूर्णानन्दमयः । ब्रह्मज्ञानिनम् अपि आकृष्य वशीकरोति । कृष्णगुणः ब्रह्मानन्दात् पूर्णानन्दमय, अत एव आत्मारामाणाम् अपि मन आकर्षति ।

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकी भक्तिमित्थंभूतगुणो हरि ॥
श्रीभा, १।७।१० ।"

श्रीकृष्णस्य नाम-गुण-लीलादय न केवलम् अन्येषाम् एव चित्ताकर्षका, स्वय श्रीकृष्णस्य अपि चित्ताकर्षका: । भगवान् एव नारदसकाशे अब्रवीत्—

"नाह तिष्ठामि वैकुण्ठे योगिना हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥"

इति । नामगुणलीलादीना माधुर्येण आकृष्ट. सन् एव भगवान् कीर्तनस्थाने उपस्थितो भवति ।

श्रीकृष्णस्य नाम-रूप-गुण-लीलादय: स्वरूपेण कृष्णात् अभिन्ना इति हेतो. तस्य रूपमाधुर्यम् इव तस्य नाम-गुण-लीलादय: अपि श्रीकृष्णस्य चित्ताकर्षका । (पृ० ८०) प्रेम्ण. अनाश्रयेण सता यथा श्रीकृष्णस्य रूपमाधुर्य न आस्वादयितु शक्यम् एव तस्य नाम-गुण-लीलादय अपि न आस्वादनीया. । श्रीराधा एतत् सर्वम् एव पूर्णतम-रूपेण आस्वादयितु शक्नोति, यत तस्या कृष्णप्रेम्ण. पूर्णतमो विकाशो वर्तते । श्रीकृष्णस्य नाम-रूप-गुण-लीलादीन् आस्वाद्य श्रीराधा यम् अनिर्वचनीयम् आनन्दम् अनुभवति तस्या अङ्गे तस्य आनन्दस्य लहरीम् आलोक्य श्रीकृष्ण अपि तत् सर्वम् आस्वादयितु प्रलुब्धो भवति । पर व्रजे स स्वविपयकस्य प्रेम्ण: अनाश्रय इति हेतो. तम् आस्वादयितु न शक्नोति, प्रेम्णो विषयरूपेण यावत् सम्भवं तावत् एव केवलम् आस्वादयति । श्रीराधाया भावद्युतिसुवलितरूपेण एव स तत्

सम्यक् आस्वादयति । अत. श्रीकृष्णमाधुर्यस्य आस्वादनम् इत्यनेन श्रीकृष्णस्य नाम-रूप-गुण-लीलादीना सर्वेषाम् एव माधुर्यस्य आस्वादन प्रतीयते । राधाभावाविष्ट प्रभु· तत् सर्वम् एव आस्वादयति ।

(२) पूर्वं एव उक्तम्—स्वमाधुर्यस्य आस्वादनवासना एव व्रजेन्द्रनन्दन-श्रीकृष्णस्य गौररूपत्वे हेतु· । माधुर्यस्य आस्वादनवासनया सह स्वत एव अपरे अपि द्वे आनुषङ्गिक्यौ वासने उदयत , यस्य प्रेम्ण. प्रभावेन श्रीराधा श्रीकृष्णस्य माधुर्यम् आस्वादयति तस्य प्रेम्ण प्रभावस्य ज्ञानवासना एका, तेन प्रेम्णा श्रीकृष्णमाधुर्यम् आस्वाद्य श्रीराधा यत् सुखम् अनुभवति तत्सुख वा कीदृशम् इत्यस्य ज्ञानवासना द्वितीया । एतावता—श्रीराधाया भावकान्ति गृहीत्वा व्रजेन्द्रनन्दन-कृष्णस्य गौरीभावहेतव तिस्रो वासना—एका मुख्या, अपरे द्वे आनुषङ्गिक्यौ—इति । प्राप्तम् । श्रीपादस्वरूपदामोदर: अपि एतत् एव उक्तवान्—

श्रीराधाया प्रणयमहिमा कीदृशो वानयैवा-
स्वाद्यो येनाद्भुतमधुरिमा कीदृशो वा मदीय । (पृ ९१)
सौख्यञ्चास्या मदनुभवत कीदृश वेति लोभात्
तद्भावाढ्य समजनि शचीगर्भसिन्धौ हरीन्दु ॥ इति ।

व्रजलीलाया व्रजेन्द्रनन्दनस्य कृष्णस्य एतास्तिस्रो वासना· सर्वदा एव अपूर्णा तिष्ठन्ति । यत एतासाम् एकतमा अपि वासना श्रीराधाप्रेम्ण आश्रयताम् अलभमानस्य न पूरिता भवेत्, न च श्रीकृष्ण. व्रजलीलाया श्रीराधाया मादनाख्यप्रेम्ण आश्रय । राधाभावद्युतिसुवलितकृष्णमतौ एव रसिकशेखर-

श्रीकृष्णस्य एताः तिस्रो वासनाः पूर्तिम् अर्हन्ति । श्रीश्रीगौरसुन्दररूपेण स कथम् एता अपूर्णा वासना अपूरयत्, कथं च श्रीकृष्णस्य नाम-रूप-गुण-लीलादीना माधुर्यम् आस्वादितवान् —तद् इदानीम् आलोच्यते ।

---

## माधुर्यास्वादनम् अपूर्ण-वासनापूरणं च

श्रीराधाभावावेशेन दिव्योन्मादग्रस्तः सन् प्रभु नीलाचले यान् वाक्चेष्टादीन् प्रकाशितवान्, श्रीपाद-स्वरूपदामोदर श्रीपाद-रघुनाथदासगोस्वामी च तान् तान् प्रत्यक्षीकृत्य तयोः कड़चायां स्तवादौ च लिखितवन्तौ । एतान् स्तवादीन् (पृ० ९२) कड़चा च दृष्ट्वा प्रत्यक्षदर्शिनो दासगोस्वामिनो मुखात् श्रुत्वा च श्रील-कृष्णदास-कविराजगोस्वामी तदीये श्रीश्रीचैतन्यचरितामृते तत् सर्वं वर्णितवान् । दिग्दर्शनार्थम् एतस्मात् वर्णनात् किञ्चित् किञ्चित् उद्ध्रियते ।

**नाममाधुर्यस्य आस्वादनम्** । श्रीकृष्णनाम आस्वाद्य श्रीराधा कथितवती—

सइ केवा शुनाइल श्यामनाम ।
ऐ नाम कानेर भितर दिया, मरमे पशिल गो,
आकुल करिल मोर प्राण ।।
ना जानि कतेक मधु, श्याम नामे आछे गो,
वदन छाड़िते नाहि पारे ।

जपिते जपिते नाम अवश करिल गो,
केमने पाइव सखि तारे ॥ (क)

राधाभावाविष्ट प्रभु अपि इत्थम् एव नाममाधुर्यम् आस्वादितवान् । पथि गच्छति, अश्रुविगलितनेत्रः प्रेमगद्गद-कण्ठं गायति च—

कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण हे ।
कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण हे ॥
कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण रक्ष माम् ।
कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण कृष्ण पाहि माम् ॥
राम राघव राम राघव राम राघव रक्ष माम ।
कृष्ण केशव कृष्ण केशव कृष्ण केशव पाहि माम् ॥

कृष्णविरहखिन्नाया· श्रीराधाया भावावेशेन प्रभुः व्यग्रो वर्त्तते । हठात् नामस्फूर्ति जाता, नाममाधुर्यस्य आस्वादनेन हर्षभरान्वित प्रभु अवदत्—(पृ० ९३)

आनन्दाम्बुधिवर्धन प्रतिपद पूर्णामृतास्वादन
सर्वात्मस्नपनं पर विजयते श्रीकृष्णसकीर्तनम् ॥

रथयात्राया प्रभो· दर्शनार्थं गौडीया भवता नीलाचल गतवन्त । तान् सहचरीकृत्य श्रीजगन्नाथस्य मन्दिर प्रदक्षिणी-कुर्वन् प्रभु· नामकीर्तनम् आरब्धवान् । प्रात कालात् तृतीय-प्रहरावधि प्रभु अविश्रान्त नृत्य-कीर्तने कृतवान् । बाह्यस्मृतिः

---

(क) सखि, केन वा श्यामनाम श्रावितम् । इद नाम कर्णद्वारेण मर्मणि प्रविष्ट सत प्राणानाकुलीचकार । न ज्ञायते श्यामनाम्नि कियद्वा मधु वर्तते, यतो रसना तत् त्यक्तु नोत्सहते । नाम जपन्त्य विवशीकृता ; कथ तं प्राप्स्यामि ।

विलुप्ता। तृतीयप्रहरेऽपि तस्य आवेशो न स्तिमितः। गायका वादका. च श्रान्त-क्लान्ता, तेषा कीर्तनपरिचालनशक्ति. तिरोहिता; प्रभु पुन पूर्णोद्यम नृत्य-कीर्तनयोः अत्यासक्त। श्रीनित्यानन्दादय छलेन कीर्तन निरुद्धवन्त.।

**रूपमाधुर्यस्य आस्वादनम्**। श्रीकृष्णदर्शनलुब्धा श्रीराधा यथा श्रीकृष्णस्य रूपादिक वर्णयन्ती सखीना समीपे प्रलाप चकार, राधाभावाविष्ट. श्रीमन्महाप्रभु अपि तथा अकरोत्।

शारदीय-महारासे श्रीकृष्णे अन्तर्हिते गोपीना चेत सु ये भावा उदिता अभवन् तद्भावावेशेन प्रभु समुद्रतटवर्तिनि कस्मिंश्चित् उपवने क्वचन ज्योत्स्नामय्या रजन्या भ्रमन् प्रतितरु प्रतिलत च श्रीकृष्णम् अन्विष्टवान्। प्रभुः उपवन वृन्दावनं समुद्र च यमुना मेने। हठात् अपश्यत्—एकस्य कदम्बवृक्षस्य तलदेशे तिष्ठति—

"कोटि मन्मथमोहन मुरलीवदन
अपार सौन्दर्ये हरे (पृ० ९४) जगन्नेत्र-मन ॥"

एवं दृष्ट्वा प्रभु. मूर्छितो भूमौ पपात। सर्वेषु अङ्गेषु कृष्णप्रेम्णः सात्त्विको विकार।

"अन्तरे आनन्द आस्वाद, बाहिरे विह्वल ॥"

ईदृशे काले प्रभो. सहचरा. स्वरूपदामोदरादय प्रभुम् अन्विष्यन्त. तत्र समागता'। तेषा यत्नेन मूर्छाभङ्ग. सञ्जात, किन्तु पूर्णा बाह्यस्मृति. न प्रत्यागता।

"उठिया चौदिगे प्रभु करे दरशन ॥"

कम् अपि अन्विष्यति इव। कण्ठतश्च अवदत्—

"काँहा गेल कृष्ण, एखनि पाइलु दर्शन।
ताँहार सौन्दर्ये मोर हरिल नेत्र मन॥

पुन केने ना देखिये मुरलीवदन।
ताँहार दर्शनलोभे भ्रमये नयन॥"

अस्याम् अवस्थाया प्रभोः मुखात् निम्नोद्धृताः प्रलापोक्तयः स्फुरिताः।

नवघन-स्निग्धवर्ण दलिताञ्जनचिक्कण,
इन्दीवर-निन्दी सुकोमल।
जिनि उपमानगण, हरे सभार नेत्र-मन,
कृष्णकान्ति परम प्रवल॥

कह सखि! कि करि उपाय।

कृष्णाद्भुत वलाहक, मोर नेत्र-चातक
ना देखि पियासे मरि याय॥

सौदामिनी पीताम्वर, स्थिर नहे निरन्तर,
मुक्ताहार वकपाँति भाल।
इन्द्रधनु शिखिपाखा उपरे दियाछे देखा
आर धनु वैजयन्ती माल॥

मुरलीर कलध्वनि, मधुर गर्जन शुनि
वृन्दावने नाचे मौरचय।
अकलङ्क पूर्णकल, लावण्य-ज्योत्स्ना झलमल,
चित्र चन्द्रेर याहाते उदय॥ (प० ९५)

लीलामृत वरिषणे, सिञ्चे चौद भुवन,
हेन मेघ यवे देखा दिल ।
दुर्दैव झञ्झा-पवने, मेघ निल अन्य स्थाने
मरे चातक पीते ना पाइल ॥ (क)

—श्रीचै, च, ३।१५।५६–६०

श्रीकृष्णः सकृत् दर्शनं दत्त्वा अन्तर्हितः अभूत् एतस्मात् कारणात् इव अतृप्त-वासनावशेन किञ्चित् क्षुब्धः प्रभुः पुनरपि उक्तवान्—

कृष्ण जिति पद्मचान्द पातियाछे मुखफाँद
ताते अधर-मधुस्मित चार ।
व्रजनारी आसि आसि, फान्दे पड़ि हय दासी,
छाडि निज पति-घरद्वार ॥
वान्धव ! कृष्ण करे व्याधेर आचार ।
नाहि गणे धर्माधर्म, हरे नारी-मृगीधर्म,
करे नाना उपाय ताहार ॥

---

(क) नवघनस्निग्धवर्णा दलिताञ्जनचिक्कणा इन्दीवरनिन्दनी सुकोमला कृष्णकान्ति. सर्वाणि उपमानवस्तूनि विजित्य सवषा मनो हरन्ती वर्तते । भण सखि, कम् उपायं करोमि । अपूर्वोऽय कृष्णमेघ, एनम् अदृष्ट्वा मम नेत्रचातक पिपासया म्रियते । (कृष्णमेघे) पीताम्बरम् अस्थिरा सौदामिनी. मुक्ताहारो वकपक्ति, शिखिपुच्छम् इन्द्रधनुः, वैजयन्तीमाला च अपर धनु, मुरलीकलध्वनि सुमधुरगर्जनम्, वृन्दावने मयूरचयो नृत्यति । यत्र मेघे अकलङ्क-पूर्णकलस्य लावण्य-ज्योत्स्ना-झलमलायमानस्य विचित्र-चन्द्रस्य समुदय । अयं लीलामृतवर्षणेन चतुर्दशभुवनानि सिञ्चति । एवविधो मेधो यदैव दृष्टिपथ गतः तदैव दुदव-झञ्झावातेन स स्थानान्तर नीत., चातकः पातुमक्षमो म्रियते ।

गण्डस्थल झलमल, नाचे मकरकुण्डल,
सेइ नृत्ये हरे नारीचय ।
सस्मित कटाक्ष-वाणे, ता-सभार हृदय हाने
नारीवधे नाहि किछु भय ॥
अति उच्च सुविस्तार, लक्ष्मी-श्रीवत्स अलङ्कार
कृष्णेर ये डाकातिया वक्ष ।
व्रजदेवी लक्ष लक्ष, ता-सभार मनोवक्ष,
हरिदासी करिवारे दक्ष ॥
सुवलित दीर्घार्गल, कृष्णभुज-युगल,
भुज नहे—कृष्णसर्पकाय ॥ (पृ० ९६)
दुइ शैलछिद्रे पैश नारीर हृदये दंशे,
मरे नारी से विष-ज्वालाय ॥
कृष्ण-करपदतल, कोटिचन्द्र सुशीतल,
जिति कर्पूर वेणामूल चन्दन ।
एकवार यारे स्पर्शे, स्मरज्वाला-विष नाशे
यार स्पर्शे लुब्ध नारीर मन ॥ (क)

श्रीचै, च, ३।१५।६२-६७

---

(क) कृष्णेन पद्मचन्द्रौ विजित्य वदन-पाशो योजित । तत्र अधर-मधुस्मितम् प्रलोभकद्रव्यं, (चार), व्रजरमण्य पतिगृहादिपरित्यागेन आगत्यागत्य पाशबद्धा दासीभवन्ति । वान्धव, कृष्णो व्याधायते, न हि धर्माधर्मं गणयति, नारी-मृगीणा धर्मं हरति, हरणोपायम् आविष्करोति । लावण्योज्ज्वल-गण्डस्थलपतितस्य मकरकुण्डलस्य नृत्येन नारीणा मनो हरति, तासा हृदये सस्मित-कटाक्षबाणान् क्षिपति, नारीवधे किञ्चिदपि भयं नास्ति । उच्चविस्तृत लक्ष्मी-श्रीवत्स-शोभितं दस्युप्रकृति श्रीकृष्णस्य वक्ष परोलक्षा व्रजदेवीर्दासीकर्तुं क्षमम् । सुवलितम् अर्गलदीर्घं कृष्ण-भुजयुगलं न भुजयुगलम् अपि तु कृष्णसर्प, स शैलद्वयमध्येन प्रविश्य

श्रीकृष्णस्य मथुरागमनानन्तरं तस्य दर्शनार्थम् उत्कण्ठिता राधा सख्या विशाखायाः समीपे श्रीकृष्णस्य वार्ता यथा अपृच्छत्, श्रीराधाया तादृशभावस्य आवेशेन प्रभु. अपि राय-रामानन्दस्य कण्ठम् आश्लिष्य उक्तवान् ।—

व्रजेन्द्र-कुल-दुग्धसिन्धु, कृष्ण ताहे पूर्ण—इन्दु,
जन्मि कैल जगत उजोर ।
कान्त्यमृत ये वा पिये, निरन्तर पिया जीये,
व्रजजनेर नयन—चकोर ।।
सखि हे ! कोथा कृष्ण कराह दर्शन ।
क्षणेक याँहार मुख ना देखिले फाटे वुक,
शीघ्र देखाओ, ना रहे जीवन ।
एइ व्रजेर रमणी, कामार्क—तप्त कुमुदिनी,
निज करामृत दिया दान ।
प्रफुल्लित करे येइ, काँहा मोर चन्द्र सेइ,
देखाओ सखि राख मोर प्राण ।।
काँहा से चूडार ठान, शिखिपिच्छेर उड़ान,
नव मेघे येन इन्द्रधनु । (पृ० ९६)
पीताम्बर तडिद्द्युति, मुक्तामाला वकपाँति,
नवाम्वुद जिनि श्याग—तनु ।।
एकवार यार नयने लागे, सदा तार हृदये जागे,
कृष्ण—तनु येन आम्र-आठा ।
नारीर मन पैशे हाय, यत्ने नाहि वाहिराय,
तनु नहे—सेयाकुलेर काँटा ।।

---

नारीहृदय दशति, नारी च विपज्वालया म्रियते । कर्पूर-चन्दन-वीरणमूलजयि, कोटिचन्द्रसुशीतल श्रीकृष्णकरपदतल सकृदपि य स्पृशति, तस्य स्मरज्वाला नाशयति, यस्य स्पर्शनार्थं नारीमनो लुब्ध वर्तते ।

जिनिया तमालद्युति, इन्द्रनील-सम कान्ति,
सेइ कान्ति जगत् माताय।
शृङ्गार-रस छानि, ताते चन्द्रज्योत्स्ना सानि,
जानि विधि निरमिल ताय॥
कोँहा से मुरलीध्वनि नवाभ्र-गर्जन जिनि,
जगदाकर्षे श्रवणे याहार।
उठि धाय व्रजजन, तृषित चातकगण,
आसि पिये कान्त्यमृतधार॥
मोर सेइ कलानिधि, प्राणरक्षा-महौषधि.
सखि! मोर तेँहो सुहृत्तम।
देह जीये ताँहा विने, धिक् एइ जीवने,
विधि करे एत विडम्वन॥ (क)

श्रीचै, च, ३।१९।३४-४१

---

(क) व्रजेन्द्रकुलदुग्धसिन्धौ जात कृष्णपूर्णचन्द्र जगदुज्ज्वल कृतवान्। व्रजजनाना नयनचकोर कान्त्यमृत निरन्तर पीत्वा जीवति। सखि, क्व कृष्ण? दर्शय। क्षण यन्मुखम् अपश्यतो हृदय विदीर्ण भवति, त शीघ्र दर्शय, प्राणा न तिष्ठन्ति। यो हि निज करामृत दत्वा कामार्कतप्तकुमुदिनीप्राया इमा व्रजरमणीः प्रफुल्लयति—स मे चन्द्र. क्वास्ते दर्शय, प्राणान् रक्ष। नवमेघे इन्द्रधनुरिव क्व सा शिखिपिच्छ-चूडा क्व तडिद्द्युति पीताम्बरम्, मुक्तामाला वकपवित, नवाम्बुद-जयिनी श्यामतनु। चूत-त्वङ्‌निर्यास इव कृष्णतनु सकृद् यस्य नेत्रे लगति, तस्य हृदये सर्वदा जागर्ति। कण्टकविशेष इव कृष्णदेह नारीणा मनसि विशन् यत्नेनापि न नि सार्यते। तमालद्युतिविजयिनी इन्द्रनीलसमा कान्तिर्जगदुन्मत्तीकरोति। शृङ्गाररस निष्पीड्य चन्द्र-ज्योत्स्ना मिश्रीकृत्य मन्ये विधिस्त निरमात्। यस्य श्रवणेन जगदाकृष्ट भवति, नवमेघध्वनिजयी स मुरलीध्वनि क्व। व्रजवासिन. तृषिता-

श्रीकृष्णगुणमाधुर्यस्य आस्वादनम्। एकदा प्रभुः श्रीजगन्नाथ पश्यति। श्रीराधाभावेन आविष्टः सन् स साक्षात् ु ˋवदन-श्रीकृष्णरूपेण एव जगन्नाथम् अपश्यत्; जगन्नाथ-विग्रहस्‍. स्वरूप पुन. न अपश्यत्। जगन्नाथं मुरलीवदन-कृष्ण-रूपेण दृष्ट्वा एव––(पृ० ९८)

एकिवारे स्फुरे प्रभुर कृष्णेर पञ्चगुण।
पञ्चगुणे करे पञ्चेन्द्रिय आकर्षण॥
एकमन पञ्चादिके पञ्चगुणे टाने।
टानाटानि प्रभुर मन हैल अगेयाने॥

श्रीचै, च, ३।१५।७।८

श्रीकृष्णस्य रूप-रस-गन्ध-स्पर्श-शब्दान् पञ्च गुणान् आस्वादयितुं प्रभो. चक्षु-कर्ण-नासिका-जिह्वात्वचां पञ्चानाम् इन्द्रियाणा युगपत् उत्कण्ठामयी लालसा जागरिता अभवत्। तदा लालसापीड़नेन अधीरः सन् भावावेशेन प्रभुः प्रलापम् अवदत्––

(क) कृष्ण-रूप-शब्द-स्पर्श, सौरभ्य अधररस,
यार माधुर्य कहन ना याय।
देखि लोभि पञ्चजन, एक अश्व मोर मन,
चढि पञ्च पाँचदिगे धाय॥
सखि हे! शुन मोर दुखेर कारण।
मोर पञ्चेन्द्रियगण, महा लम्पट दस्युगण,
सभे करे हरे परधन॥

---

श्चातका इव धावन्ति कान्त्यमृतधारा पिबन्ति च। स मम चन्द्रः प्राणरक्षामहौषधि. सुहृत्तमश्च। त विनापि म्रियमाण देह जीवनञ्च धिक्। विधातुरेतावती विडम्बना।

एक अश्व एक क्षणे, पाँचे पाँचदिगे टाने,
एक मन कोन् दिगे याय।
एक काले सभे टाने, गेल घोडार पराणे,
एइ दुःख सहन ना याय ॥

इन्द्रिये ना करि रोष, इहा सभार काँहा दोष
कृष्णरूपादि महा आकर्षण।
रूपादि पाच पाँचे टाने, गेल पाँचेर पराणे,
मोर देहे ना रहे जीवन ॥ (पृ० ९९)

कृष्णरूपामृत-सिन्धु, ताहार तरङ्ग विन्दु,
एकविन्दु जगत डुवाय।
त्रिजगते यत नारी, तार चित्त उच्च गिरि,
ताहा डुवाय आगे उठि धाय ॥

कृष्णेर वचन-माधुरी, नानारस-नर्मधारी,
तार अन्याय कहन ना याय।
जगतेर नारीर काणे, माधुरीगुणे वन्धि टाने
टानाटानि कानेर प्राण याय ॥

---

(क) अनिर्वचनीयमाधुर्यान् कृष्णस्य रूप-शब्द-स्पर्श-सौरभ्याधर-रसान् वीक्ष्य मम लुब्धानि पञ्चेन्द्रियाणि एक मनोऽश्वम् आरुह्य पञ्चसु दिक्षु धावन्ति। लम्पटा दस्यवो मे इन्द्रियगणा परधन हरन्ति। पञ्च एकम् अश्वम् एकदा पञ्चसु दिक्षु आकर्षन्ति, एक मन क्व गच्छतु। एकदा पञ्चानाम् आकर्षणेन अश्वस्य प्राणा निर्गता—इदम् असह्यं दुःखम्। नाहम् इन्द्रियेभ्य कुप्यामि, एषा को दोष, कृष्णरूपादय सुरताम् आकर्षका वर्तन्ते। रूपादय पञ्च इन्द्रियाणि पञ्च आकर्षन्ति, मम देहे जीवन न तिष्ठति। कृष्ण-

कृष्ण अङ्ग सुशीतल, कि कहिव तार वल,
छटाय जिने कोटीन्दुचन्दन।
सशैल नारीर वक्ष, ताहा आकर्षिते दक्ष,
आकर्षये नारीगणमन ॥

कृष्णाङ्ग-सौरभ्यभर, मृगमद-मद-हर,
नीलोत्पलेर हरे गर्वधन।
जगत-नारीर नासा, तार भितर करे वासा,
नारीगणेर करे आकर्षण ॥

कृष्णेर अधरामृत, ताते कर्पूर मन्दस्मित,
स्वमाधुर्ये हरे नारीमन।
छाडाय अन्यत्र लोभ, ना पाइले मने क्षोभ
व्रजनारीगणेर मूलधन ॥

श्रीचै, च, ३।१५।१३-२१

लीलामाधुर्यस्य आस्वादनम्—

एकदिन महाप्रभु करियाछेन शयन।
कृष्ण रासलीला करे देखेन स्वपन ॥ (पृ १००)

---

रूपामृतसिन्धो एको बिन्दु जगत् प्लावयति, त्रिजगन्नारीणाम् उच्चान् चित्तगिरीन् निमज्य धावति। नानारस-नर्मधारिणी कृष्णवचनमाधुरी, तस्या अन्याय्यम् अकथ्यम्। नारीणा कर्णेन्द्रियाणि आकर्षति, आकर्षण-विकर्षणाभ्या कर्णाना प्राणा निर्गच्छन्ति। सुशीतल कृष्णाङ्ग कान्त्या कोटीन्दुचन्दन, जयति। सशैल-नारीवक्षसाम् आकर्षणसमर्थ तत् नारीणा मनो हरति। मृगमदमदहरं नीलोत्पलगर्वहारि कृष्णाङ्गसौरभ्यं नारीणा नासासु उषित्वा ता आकर्षति। मन्दस्मित-कर्पूरभरितं कृष्णाधरामृत माधुर्येण नारीमनो हरति, अन्यवस्तुलोभ स्थगयति, अप्राप्त च सत् क्षोभं जनयति। इदमेव व्रजनारीणा मूलधनम्।

त्रिभङ्ग सुन्दर देह मुरलीवदन ।
पीताम्वर वनमाला मदनमोहन ॥

मण्डलीवन्धे गोपीगण करेन नर्तन ।
मध्ये राधा सह नाचे व्रजेन्द्र-नन्दन ॥

देखि प्रभु सेइ रसे आविष्ट हइला ।
"वृन्दावने कृष्ण पाइनु" एइ ज्ञान हइला ॥

प्रभुर विलम्ब देखि गोविन्द जागाइला ।
जागिले "स्वप्न"—ज्ञान हैल प्रभु दुःखी हैला ॥

देहाभ्यासे नित्यकृत्य करि समापन ।
काले याइ कैल जगन्नाथ-दरशन ॥ (क)

श्रीचै, च, ३।१४।१५-२०

तदा अपि प्रभो आवेशो न अपगतः ; स —

जगन्नाथे देखे साक्षात् व्रजेन्द्र-नन्दन ॥

स सुभद्रा-बलरामौ न पश्यति, केवल जगन्नाथम् एव पश्यति, तत् अपि व्रजेन्द्र-नन्दन-श्रीकृष्णरूपेण । कियत्कालात् पर केनचित् कारणेन प्रभो. भावान्तरम् उपस्थितम् अभवत्, तदा स सुभद्रा बलराम च अपश्यत् । पर श्रीकृष्णेन सह सुभद्रा-बलरामौ व्रजे न तिष्ठत ; श्रीराधा सुभद्रा-बलरामाभ्या

---

(क) एकदा प्रभुर्निद्रित. कृष्ण रासक्रीडा कुर्वन्तम् अपश्यत् । त्रिभङ्गसुन्दरदेहो मुरलीवदन पीताम्वर मदनमोहनो वनमाली राधया सह मध्ये नृत्यति, गोप्यो मण्डलाकारेण नृत्यन्ति । तद्रसाविष्टस्य प्रभो. "वृन्दावने कृष्ण लब्धवान्" इति ज्ञानमासीत् । प्रभोर्विलम्ब दृष्ट्वा गोविन्द त प्रबोधितवान् । प्रबुद्धस्य प्रभो "स्वप्न" ज्ञानात् दु.खम् अभूत् । अभ्यासवशात् नित्यकृत्यं समाप्य यथाकाल जगन्नाथम् अपश्यत् ।

सह श्रीकृष्णं कुरुक्षेत्रे एव दृष्टवती। तदानी श्रीराधाया मनसि यो भाव उदित आसीत्, सुभद्राबलरामौ दृष्ट्वा प्रभोः मनः अपि तद्भावाविष्टम् अभवत्; स मनसि कृतवान् यत्—कुरुक्षेत्रे एव श्रीकृष्णं पश्यति।

काँहा कुरुक्षेत्रे आइलाङ, काँहा वृन्दावन ॥

सः अचिन्तयत्—"किम् इदम्? एतावन्तं कालं श्रीकृष्णेन सह वृन्दावने एव आसम्, इदानी हठात् कथ कुरुक्षेत्रे तिष्ठामि? कुत. (१०१ पृ०) कुरुक्षेत्रम् आगतः? कथं वा अहम् अत्र समागत.? वृन्दावन क्व गतम्? तदा—

प्राप्त रत्न हाराइल ऐछे व्यग्र हैला।
विषण्ण हइया प्रभु निज वासा आइला ॥
भूमिर उपर वसि निज नखे भूमि लेख।
अश्रुगङ्गा नेत्रे वहे किछु नाहि देखे ॥
"पाइलु वृन्दावन-नाथ पुन हाराइलुँ।
के मोर निलेक कृष्ण, कोथा मुइ आइलुँ ॥ (क)

—श्रीचै, च, ३।१४।३३ ३५

तदानीम् अपि प्रभोः आवेशो न अपगतः। सर्व दिनम् इत्थम् अतीतम्। रात्रौ स्वरूपदामोदर-रामानन्दयोः समीपे मनोदु.खं प्रकाशितवान्।

---

(क) स लब्धरत्नमोषादिव व्यग्रो बभूव। विषण्ण. प्रभुः स्व वासम् आजगाम। भूम्यामुपविष्ट नखेन भूमि लिखति। नेत्रयोरश्रुगङ्गा प्रवहति, किमपि न पश्यति। प्राप्तो वृन्दावननाथ. पुन. हारित., केन मे कृष्णो नीतः, क्व वा अहम् आगतः।

अपरेद्युः प्रभु समुद्रस्नानार्थं गच्छति ; सह गोविन्दो वर्तते। पथि चटकपर्वतं दृष्ट्वा गोवर्धन-बुद्धया तदभिमुख ऊर्ध्वश्वासं प्राद्रवत्।

प्रथमे चलिला प्रभु येन वायुगति ।
स्तम्भभाव पथे हैल—चलिते नाहि शक्ति ॥
प्रति रोमकूपे मास व्रणेर आकार ।
तार उपरे रोमोद्गम कदम्ब-प्रकार ॥
प्रति रोमे प्रस्वेद पडे रुधिरेर धार ।
कण्ठ घर्घर—नाहि वर्णर उच्चार ॥
दुइ नेत्र भरि अश्रु वहये अपार ।
समुद्रे मिलिल येन गङ्गायमुनाधार ॥ (पृ० १०२)
वैवर्ण्ये शङ्ख प्राय श्वेत हैल अङ्ग ।
तबे कम्प उठे येन समुद्र-तरङ्ग ॥
काँपिते काँपिते प्रभु भूमिते पडिला ।
तबे त गोविन्द प्रभुर निकटे आइला ॥ (क)

श्रीचै, च, ३।१४।८५-९०

गोविन्दो जलं सिञ्चति। परित कोलाहलो जातः। तत् श्रुत्वा स्वरूपदामोदरादय समागता। ते बहुकालम्

(क) आदौ प्रभु वायुगत्या चचाल, पथि स्तम्भभाव. सम्भूत., गतिशक्तिस्तिरोहिता। प्रतिरोमकूप व्रणाकार मासम्, तदुपरि कदम्बवद् रोमोदगम। प्रतिरोमकूप रुधिरधारेव प्रस्वेद क्षरति। घर्घर कण्ठ, वर्णोच्चारो न भवति। समुद्रपतित गङ्गा-यमुनाधाराद्वयम् इव नेत्रद्वय प्लावयत् अश्रु वहति। अङ्ग वैवर्ण्यात् शङ्खवत् श्वेतम् अभूत्। तत्र समुद्रतरङ्ग इव कम्प उदभूत्। कम्पमान प्रभुः पृथिव्याम् अपतत्। तदा गोविन्द. प्रभो समीपे समागत।

८

उच्चैः सङ्कीर्तनम् अकुर्वन् । तदा "हरिवोल" इत्युक्त्वा प्रभुः सहसा उत्थाय उपविष्टः ; पर बाह्यज्ञानं न प्रत्यावृत्तम् ।

उठि महाप्रभु विस्मित इति उति चाय ।
ये देखिते चाहे, ताहा देखिते ना पाय ॥

लोकसमागम विलोक्य प्रभोः अर्धज्ञानम् अभूत् । तदानीम् अवदत्—

गोवर्धन हैते मोरे के इहाँ आनिल ।
पाइया कृष्णेर लीला देखिते ना पाइल ॥
इहाँ हैते आजि मुञि गेलु गोवर्धन ।
देखो यदि कृष्ण करे गोधन-चारण ॥
गोवर्धने चढ़ि कृष्ण वाजाइला वेणु ।
गोवर्धनेर चौदिके चरे सब धेनु ॥
वेणु-नाद शुनि आइला राधाठाकुराणी ।
ताँर रूप भाव सखि वर्णिते ना जानि ॥
राधा लञा कृष्ण प्रवेशिला कन्दराते ।
सखीगण कहे मोके फुल उठाइते ॥
हेन काले तुमि सब कोलाहल कैला ।
ताहाँ हैते धरि मोरे इहाँ लञा आइला ॥ (पृ० १०३)
केन वा आनिले मोरे वृथा दुःख दिते ।
पाइया कृष्णेर लीला ना पाइलु देखिते ॥
एत वलि महाप्रभु करेन क्रन्दन । (क)

श्रीचै, च, ३।१४।९९-१०६

---

(क) केनाहं गोवर्धनात् इह आनीत , प्राप्य अपि कृष्णलीला न द्रष्टुं शक्या । अद्य अहम् इतो गोवर्धन गतवान्, द्रक्ष्यामि, यदि कृष्ण-स्तत्र गाश्चारयेत् । कृष्णो गोवर्धनमारुह्य वेणुम् अवादयत्, चतुर्दिक्षु

भावावेशेन प्रभु· रासान्ते जलकेलिलीलाम् अपि दृष्टवान् ।

लीलाग्रन्थादिभ्यो ज्ञायते यत् श्रीराधा अपि कदाचित् स्वं ललिता ललिता च राधा मेने, तदनुरूप व्यवहारम् अपि कृतवती इति। एतत् च दिव्योन्मादस्य उद्घूर्णा इति परिभाष्यते। उद्घूर्णावशात् एव राधाभावाविष्ट· प्रभु· पूर्वोक्त-प्रलाप-वाक्यादौ स्व श्रीराधाम् अमन्यत इति न, तदानीम् अपि तत्र श्रीराधाभाव· आसीत् इत्यत्र तदङ्गे सात्त्विकविकारादिः एव प्रमाणम्। प्रेमावेशेन सात्त्विकविकार राधा विहाय अन्यत्र अपि जायते, पर राधाव्यतिरिक्तायाम् अन्यत्र सूद्दीप्त-सात्त्विकं प्रायो न दृश्यते। एतच्च पश्चात् आलोचयिष्यते।

यद् भवतु, श्रीमन्महाप्रभुः पूर्वोक्तरूपेण श्रीकृष्णमाधुर्यम् आस्वादितवान्, ज्ञातवान् च—श्रीकृष्णमाधुर्यास्वादनेन कीदृशं सुख लभ्यते इति। अनेन प्रकारेण स व्रजलीलाया अपूर्णासु तिसृषु वासनासु द्वे वासने पूरितवान्।

( ग्रन्थकलेवरवृद्धिभयेन अत्र प्रलापोक्तीना विवृतिः न दत्ता। जिज्ञासवो मूललेखकसम्पादिताम् श्रीश्रीचैतन्यचरितामृत-तृतीयसस्करणस्य गौरकृपातरङ्गिनी-टीका द्रष्टुम् अर्हन्ति।)

श्रीराधायाः प्रेममहिमज्ञानवासना कथ तेन पूरिता, इदानी तद् एव आलोच्यते। (पृ० १०४)

---

धेनवश्चरन्ति। वेणुध्वनि श्रुत्वा राधिका देवी समागता। तस्या रूप भावश्च वर्णयितुम् अशक्ये। राधया सह श्रीकृष्ण गुहाया प्रविष्टवान्। सख्यो मा कुसुमानि चेतुम् आदिशन्—एतस्मिन् अवसरे यूय कोलाहल कृतवन्त, तत स्थानान्माम् इहानीतवन्तश्च। केवल दुःखयितुं कथ माम् इहानीतवन्त ? प्राप्तापि कृष्णलीला न दृष्टा—इत्युक्त्वा प्रभु· क्रन्दितुम् आरेभे।

# श्रीराधायाः प्रेममहिम्न आस्वादनम्

## ( १ )

राय-रामानन्देन सह साध्य-साधन-तत्त्वस्य आलोचना-प्रसङ्गेन श्रीमन्महाप्रभुः रामानन्दस्य मुखात् राधाप्रेम्णः काचन महिमवैचित्री प्रकाशितवान् । राय-रामानन्दः कथयति—दास्यप्रेमापेक्षया सख्यप्रेम्णः, सख्यप्रेमापेक्षया वात्सल्यप्रेम्णः वात्सल्यप्रेमापेक्षया च कान्ताप्रेम्णः महिमा अत्यधिकः । कान्ताप्रेमसु पुनः श्रीराधाप्रेम सर्वातिशायि । व्रजगोपीनां सर्वासाम् एव समीपे श्रीकृष्णेन स्वस्य अपरिशोध्य-प्रेमऋणित्वस्य कथा "न पारयेऽहं निरवद्यसयुजाम्" इत्यादिना वाक्येन स्वमुखात् एव व्यक्तीकृता । पर श्रीराधायाः समीपे तस्य प्रेमवश्यता सर्वाधिका । श्रीकृष्ण. अद्वयज्ञानतत्त्व, सर्वांशी सर्वाश्रयश्च, तथापि स यत् श्रीराधायाः प्रेमवश्यतया तस्याः प्रेमरूपस्य ऐन्द्रजालिकस्य करे पुत्रिका इव नृत्यति—एतावता एव श्रीराधाप्रेम्ण एकम् अपूर्व वैशिष्ट्यं सूचित भवति । राय-रामानन्दः अन्यत् अपि विज्ञापितवान्—श्रीकृष्णस्य रस-स्वरूपत्वे मदनमोहनत्वे च श्रीराधाप्रेम एव हेतु. । श्रीराधा-प्रेम अन्यनिरपेक्षम् । स्वीयप्रेमप्रभावेन श्रीराधा एव रासेश्वरी, रासस्थलया श्रीराधाया अनुपस्थितौ शतकोटिगोपीनाम् उपस्थितया अपि परमरसकदम्बमयी रासलीला भवितुं नार्हति, किम् अधिक रासलीलावासना अपि श्रीकृष्णस्य हृदयात् अन्तर्धत्ते । श्रीराधायाः प्रेमप्रभावात् एव श्रीश्रीराधा-

कृष्णयो विलासमहत्त्वम्, श्रीकृष्णस्य धीरललितत्वम् उभयोः प्रेमविलासविवर्तश्च भवति, येन प्रेमविलासविवर्तेन राधा-कृष्णयो. परैक्य- (पृ० १०५) प्राप्ति । रामानन्दमुखात् एतत् सर्व श्रुत्वा प्रभु अवदत्—"राधाप्रेम साध्यशिरोमणि ." इति । प्रभु प्रेमाविष्ट सन् एव राधाप्रेम्ण इद वैशिष्ट्यम् अशृणोत्, परमानन्दम् अनुभूय रामानन्दम् उक्तवान् च—"अपूर्व अमृतनदी वहे तोमार मुखे ।' इति ।

अनेन प्रकारेण राधाप्रेम्ण एका महिमवैचित्री प्रभुः आस्वादितवान् । परम् आनन्ददायिनी अपि इय—तात्त्विको महिमा । प्रभो. मानसे आनन्दम् उत्पादयन् अय तात्त्विको महिमा एकं प्रभाव विस्तार्य स्थित अपि न एकमात्रो महिमा । प्रभो· चित्ते देहे च राधाप्रेम्ण · कीदृश अपूर्व प्रभाव. आत्म-प्रकाशम् अकरोत् तत् इदानीम् आलोच्यते ।

( २ )

प्रेममहिमा द्विधा अभिव्यक्तो भवितुम् अर्हति—आस्वादन-माधुर्येण देहे तस्य प्रभावेन च ।

पूर्वमेव उक्तं—प्रेम ह्लादिनीशक्तेर्वृत्तिरिति । अत स्वभावात् एव इदं मधुरम् आस्वाद्य च । प्रेम यावत् गाढ भवति, अस्य आस्वाद्यत्व माधुर्यं च तावत् एव वृद्धि प्राप्नोति । श्रीराधाया मादनाख्य प्रेम प्रेम्णो गाढतमा अवस्था—अनुरागोत्कर्षस्य चरमतमो विकाश, अत श्रीराधाप्रेम्ण माधुर्यम् अपि सर्वाति-शायि । प्रेम यदा गाढतां लभमान क्रमेण महाभावस्तरे उन्नीत भवति तदा तत् एकम् अनिर्वचनीयं माधुर्यं धत्ते ।

एतत् अमृतापेक्षया अपि कोटिकोटिगुणेन मधुरम् । मन्ये अमृतम् अपि महाभावस्य माधुर्यं वरयत् कृतार्थी भवितुम् इच्छति। एतादृश माधुर्यम् एव महाभावस्य स्वरूपगता सम्पत् । अत एव उज्ज्वलनीलमणौ महाभावः (पृ० १०६) "वरामृत-स्वरूपश्री" तया उक्त । एतादृशमहाभावस्य एव गाढतमा अवस्था श्रीराधाया मादनाख्य प्रेम । अतो मादनस्य माधुर्यं सर्वातिशायीत्यत्र सन्देहो नास्ति ।

एतत् अपि पूर्वम् उक्तं यत् ह्लादिनी इत्यनेन ह्लादिनी-प्रधाना स्वरूपशक्ति. एव अवगम्यते, तत्र ह्लादिनी यथा वर्तते संवित् अपि तथा वर्तते, प्राधान्य तु ह्लादिन्या एव। ह्लादिन्यंशेन प्रेम मधुर भवति ; संविदशेन अनुभवो भवति।



## माधुर्यातिशयरूपस्य राधाप्रेममहिम्नः अनुभवः

मादनो यस्य अनुरागोत्कर्षस्य चरमतमो विकाशः, तस्य त्रीणि स्वरूपाणि---भाव. करणं कर्म च। भावस्वरूप अयम् अनुरागोत्कर्ष.---आनन्दांशे श्रीकृष्णानुभवरूपः। अनुरागस्य उत्कर्षावस्थायां यदा बलवत्या उत्कण्ठया श्रीकृष्णमाधुर्यादयः अनुभूता भवन्ति तदा माधुर्यादीनाम् आस्वादनाधिक्यात्

आस्वादक· तथा तन्मयीभवति यथा तस्य आत्मस्मृति· अपि विलुप्ता भवति, माधुर्यादिस्मृतिः अपि विलुप्ता भवति, केवलम् आस्वादनस्य अनुभवस्य वा ज्ञानम् अविलुप्त तिष्ठति। एतादृश्याम् अवस्थायाम् अनुरागोत्कर्ष एव नून केवलानुभवात्मना केवलानुभवानन्दात्मना वा पर्यवसितो भवति। इयम् एव अनुरागोत्कर्षस्य भावस्वरूपता। अतः पर करणस्वरूपता। करणम्—उपायः, यद्द्वारा यत्-साहाय्येन वा किञ्चन कर्म क्रियते तत् तस्य कर्मणः करणम्, यथा, यष्टिद्वारा कस्यचन प्रहारः; अत्र यष्टिः प्रहारस्य करणम्। सविदंशे अनुरागोत्कर्षेण (पृ० १०७) श्रीकृष्ण-माधुर्यादि आस्वाद्यते।

> प्रौढ निर्मल भाव प्रेम सर्वोत्तम।
> कृष्णेर माधुरी आस्वादनेर कारण॥
>
> श्रीचै, च, १।४।४४

अत· अनुरागोत्कर्ष· श्रीकृष्णस्य माधुर्यादि आस्वादने करणम्। अयम् अनुरागो यदा सर्वोत्कर्ष लभते, तदा तद्द्वारा श्रीकृष्ण-माधुर्यादयः अपि सर्वोत्कृष्टतया आस्वादयितुं शक्यन्ते। सर्वशेषे कर्मस्वरूपता। यत् क्रियते, तत् कर्म। अनुरागोत्-कर्षद्वारा यथा श्रीकृष्णस्य माधुर्यादयः आस्वाद्यन्ते तथा श्रीकृष्णमाधुर्यादीनाम् आस्वादनद्वारा अपि अनुरागोत्कर्षः समनुभूयते। श्रीश्रीचैतन्यचरितामृते उक्तम्—

> गोपीगण करे यवे कृष्णदरशन।
> सुखवाञ्छा नाहि, सुख हय कोटिगुण॥

गोपिकादर्शने कृष्णेर ये आनन्द हय ।
ताहा हैते कोटिगुण गोपी आस्वादय ॥ (क)

१।४।१५७-५८

य अयं गोपिकानाम् आनन्दः स एव श्रीकृष्णमाधुर्यस्य आस्वादनप्रभावेन स्वानुरागोत्कर्षस्य अनुभवरूप आनन्दः । श्रीकृष्णदर्शनेन तासां हृदयस्थितं प्रेम अनुरागोत्कर्षो वा उच्छ्वसितो भवति, अस्य उच्छ्वसितस्य अनुरागोत्कर्षस्य अनुभवात् अयम् आनन्दः—अनुरागोत्कर्षस्य ह्लादिन्यंशस्य अनुभवजनितः आनन्द. । अनुरागप्रभावेन श्रीकृष्णस्य असमोर्ध्वं माधुर्यं वृद्धिं प्राप्नोति ; एवं श्रीकृष्णमाधुर्यस्य आस्वाद-प्रभावेन अपि अनुरागोत्कर्षः असमोर्ध्वरूपेण वृद्धि प्राप्नोति । एतत् एव श्रील-कृष्णदास-कविराजः श्रीकृष्णमुखात् प्रकाशित-वान् ।

मन्माधुर्य राधाप्रेम दोहे होड करि ।
अन्योन्ये वाडये केहो मुख नाहि मुडि ॥

श्रीचै, च, १।४।१२४

अनेन रूपेण, मादनस्य अनुभवजनितो य आनन्द सः अपि सर्वातिशायी । राधाभावाविष्ट. प्रभुः श्रीकृष्णमाधुर्यस्य आस्वादनव्यपदेशेन राधाप्रेममादनस्य (पृ० १०८) आस्वादन-जनितम् अनिर्वचनीयम् आनन्दम् अनुभूय **राधाप्रेम्णो माधु-र्यातिशयरूपां महिमवैचित्रीम् उपलब्धवान् ।**

---

(क) गोप्यो यदा कृष्ण पश्यन्ति, तदा तासां सुखवाञ्छा न तिष्ठति, पर कोटिगुण सुख भवति । गोपीना दर्शनेन श्रीकृष्णस्य यावान् आनन्दो भवति गोप्यस्तु ततः कोटिगुणम् आनन्दम् आस्वादयन्ति ।

**प्रभोः देहे राधाप्रेम्णः प्रभावः।** कदाचित् रात्रौ सर्वैः अलक्षितः प्रभुः गम्भीरातो बहिः अभूत्। स्वरूपदामोदरादयः पश्चात् तत् विदित्वा अन्विष्यन्तो जगन्नाथमन्दिरस्य सिंहद्वारात् उत्तरस्या दिशि तम् अवापुः। प्रभुः भूमौ पतितो वर्तते ; तस्य देहावस्था अद्भुता।

प्रभुर पडियाछे दीर्घ—हात पाँच छय।
अचेतन देह, नासाय श्वास नाहि वय॥
एकेक हस्तपद—दीर्घ तिन तिन हात।
अस्थिग्रन्थि भिन्न, चर्म आछे मात्र तात॥
हस्त पद ग्रीवा कटि अस्थि सन्धि यत।
एकेक वितस्ति भिन्न हइयाछे तत॥
चर्म मात्र उपरे सन्धिर आछे दीर्घ हञा।
दुःखित हइला सभे प्रभुके देखिया॥
मुखे लाला फेन प्रभुर उत्तान नयन।
देखितेइ सब भक्तेर देहे छाडे प्राण॥ (क)

श्रीचै, च, ३।१४।६०-६४

स्वरूपदामोदरेण वहुकाल यावत् कर्णे कृष्णनाम्नि उच्चैः उच्चारिते प्रभोः चेतना सञ्जाता ; तदानीम् एव तस्य देहस्य

---

(क) पञ्चप-हस्तपरिमितः प्रभोर्देह पतितो वर्तते। अचेतनो देहः नासायां श्वासो न वहति। प्रत्येक हस्तपद हस्तत्रयमितम्, तत्र अस्थि-ग्रन्थि शिथिला चर्ममात्र वर्तते। हस्तपदादीनाम् अस्थिसन्धयो वितस्तिमानेन पृथग्भूता, सन्ध्युपरि दीर्घ-चर्ममात्रम्। प्रभुं दृष्ट्वा सर्वे दुःखिता। मुखे फेनम् लोचद्वयम् उत्तानम् अवलोक्य भक्तानां प्राणा उत्क्रान्ताः।

अपि स्वाभाविकी अवस्था प्रत्यागता। तदा स्वं सिंहद्वारगतं दृष्ट्वा प्रभोः विस्मयो जातः स्वरूपदामोदरं पृष्टवान् च— "काहाँ कर कि।" स प्रत्युवाच—"प्रभो, गृहम् आगच्छ, तत्र सर्वं (पृ० १०९) कथयामि।" प्रभुं गृहीत्वा ते गम्भीरायां प्रत्यावृत्ताः प्रभोः अवस्थां च साकल्येन तं विज्ञापितवन्तः। तदा—

प्रभु कहे—किछु स्मृति नाहिक आमार।
सबे देखि—हय मोर कृष्ण विद्यमान।
विद्युत् प्राय देखा दिया करे अन्तर्धान॥

श्रीचै, च, ३।१४।७२-७३

अन्येद्युः उज्ज्वलज्योत्स्नामय्यां रजन्यां प्रभुः—गोपीभिः सह श्रीकृष्णस्य जलकेलिलीलादर्शनभावेन आविष्टः सन् यमुनाभ्रमेण समुद्रमध्ये झम्पं दत्त्वा पपात। सहचराः केऽपि न बुबुधिरे। सर्वां रात्रीं ते प्रभुम् अन्विष्टवन्तः। समुद्र-पतनमात्रेण एव प्रभुः मूर्छितो बभूव—एकान्ततो बाह्यज्ञान-रहितः। शुष्ककाष्ठखण्ड इव कदाचित् प्लवते कदाचित् च मज्जति। तरङ्गाः तं कोणार्काभिमुखं निन्युः।

"यमुनाते जलकेलि गोपीगण-सङ्गे।
कृष्ण करे—महाप्रभु मग्न सेइ रङ्गे॥"

दैवात् स कस्यचन जालिकस्य जालेन बद्धः अभवत्। महान्तं मीनं मत्वा जालिकः तं जालेन सह आकृष्य उत्थापितवान्। जालात् मोचनकाले प्रभोः स्पर्शेन जालिकः प्रेमोन्मत्तो बभूव— हसति रोदिति नृत्यति गायति "हरि हरि" ब्रवीति च। जालिकः आत्मानं भूतग्रस्तं मेने। प्रभुं समुद्रसैकते परित्यज्य

स भूतचिकित्सकसमीपे चलित. ; पथि प्रभो.. अन्वेषणरतैः स्वरूपादिभि. सह साक्षात्कारो जातः । जालिकस्य अद्भुतम् आचरण विलोक्य स्वरूपदामोदर त धृतवान् । तन्मुखे सर्व वृत्तान्त श्रुतवान् । जालिकः प्रभु न विवेद, अद्भुत. कश्चन मृतदेह इति मेने ।

शरीर दीघल तार—हात पाँच नात ।
एकेक हाथ पाद तार तिन तिन हाथ ॥
अस्थिसन्धि छुटिल, चाम करे नडवडे ।
ताहारे देखिते प्राण नाहि रहे धडे ॥
मडारूप धरि रहे उत्तान नयन ।
कभु "गों गों" करे कभु अचेतन ॥(ग)

श्रीचै, च, ३।१८।४९-५१

स्वरूपादयो वुद्धवन्तः—अयं प्रभु. एव । जालिक शान्तं कृत्वा तेन सह ते प्रभो· समीपं गतवन्त. । गत्वा ददृशुः—

भूमि पडि आछे प्रभु, दीर्घ सव काय ।
जले श्वेत तनु, वालु लागियाछे गाय ॥
अतिदीर्घ शिथिल तनु, चम नटकाय ।

श्रीचै, च, ३।१८।६८–६९

समयोचितान् सेवादीन् समाप्य स्वरूपेण कर्णे कृष्णनाम्नि उच्चै उच्चारिते कियत्कालात् अनन्तर प्रभोः वाह्यज्ञान प्रत्यागतम्, शरीरम् अपि स्वाभाविकीम् अवस्था प्राप ।

---

(ग) पञ्चसप्त-हस्तपरिमित शरीरदैर्घ्यम्, एकैक करचरण त्रि त्रि-हस्तमितम् । भिन्ना अस्थिसन्धय, चर्म नडवडायते (शिथिलम्) । त पश्यतो देहे प्राणा न तिष्ठन्ति। मृतवद् वर्तते, उत्ताने नयने। कदाचित् गो गो शब्द करोति, कदाचित् अचेतनो वर्तते ।

गता तावत् प्रभोः दीर्घाकृतिधारणकथा। क्वचित् क्वचित् प्रभुः कूर्माकृतिम् अपि दधार।

एकदा रात्रौ सर्वालक्षितः प्रभुः गम्भीरातो निष्क्रान्तः। स्वरूपदामोदरादयः प्रभुम् अन्विष्यन्तो जगन्नाथस्य सिंहद्वारात् दक्षिणस्यां दिशि 'तेलेङ्गा' गोगणस्य मध्ये तं ददृशुः। प्रभोः देहस्य अद्भुता अवस्था।

पेटेर भितर हस्त-पद—कूर्मेर आकार।
मुखे फेन, पुलकाङ्ग, नेत्रे अश्रुधार॥ (पृ १११)
अचेतन पड़ि आछे, येन कुष्माण्ड फल।
वाहिरे जडिमा, अन्तरे आनन्द,विह्वल॥
गाभीसव चौदिगे शुङ्खे प्रभु-अङ्ग।
दूर कैले नाहि छाड़े महाप्रभूर सङ्ग॥
यतेक करिल यत्न, ना हय चेतन।
प्रभुरे उठाइया घरे आनिल भक्तगण॥
उच्च करि श्रवणे करे कृष्णसङ्कीर्तन।
अनेकक्षणे महाप्रभु पाइल चेतन॥
चेतन पाइले हस्त पद वाहिराइल।
पूर्ववत् यथायोग्य शरीर हइल॥ (क)

श्रीचै, च, ३।१७।१५-२०

---

(क) हस्तपदम् उदरप्रविष्टम्, कूर्माकृति, मुखे फेन, पुलकितमङ्गम्, नेत्रयो अश्रुधारा। कुष्माण्डफलवत् अचेन। बहिर्जडता, अन्तरानन्दविह्वलम्। धेनवः अभित प्रभोरङ्गानि जिघ्रन्ति। अपसारिता अपि प्रभो सङ्गं न त्यजन्ति। बहुना यत्नेन अपि चैतन्यं न आगतम्। भक्ताः प्रभुम् उत्थाप्य गृहम् आनीतवन्त। श्रवणयोरुच्चैः कृष्णसङ्कीर्तनम् अकुर्वन्। बहो कालात् प्रभु चेतना लब्धवान्। प्राप्ते चैतन्ये हस्तपद बहिर्गतम्, शरीर यथापूर्वम् अभवत्॥

तदा—उठिया वसिया प्रभु चाहे इति-उति ।
स्वरूपे कहे—"तुमि आमा आनिले कति ॥
वेणु-शब्द शुनि आमि गेलाङ वृन्दावन ।
देखि—गोष्ठे वेणु वाजाय व्रजेन्द्र-नन्दन ॥
सङ्केत-वेणुनादे राधा आनि कुञ्जघरे ।
कुञ्जेरे चलिला कृष्ण क्रीडा करिवारे ॥
ताँर पाछे पाछे आमि करिनु गमन ।
ताँर भूषा-ध्वनिते आमार हरिल श्रवण ॥
गोपीगण-सह विहार हास-परिहास ।
कण्ठध्वनि उक्ति शुनि मोर कर्णोल्लास ॥
हेनकाले तुमि सव कोलाहल करि ।
आमा इहाँ लैया आइला वलात्कारे धरि ॥(क)

श्रीचै, च, ३।१७।२१-२६ (पृ० ११२)

राधाभावाविष्टस्य प्रभोः देहस्य दैर्घ्यं कूर्माकृतित्वं च—तदीयदेहे चित्तस्थितराधाभावस्य अपूर्वं कञ्चन प्रभावं प्रकाशयतः। समुद्रे यदा प्रबलो जलोच्छ्वासो (वन्या) भवति, तदा स समुद्रसम्बन्धिनी. नदनदी. अपि स्फीता कृत्वा तीर-

---

(क) उत्थाय उपविष्ट प्रभु. इतस्तत पश्यति। स्वरूपम् अपृच्छत्—त्व मा कुत्र आनीतवानसि। वेणुध्वनिं श्रुत्वा अह वृन्दावन गत पश्यामि स्म—व्रजेन्द्रनन्दनो गोष्ठे वेणु वादयति। वेणुध्वनि-सङ्केतेन श्रीराधा कुञ्जगृहम् आनीय कृष्णो विहारार्थं तत्र चलित। तस्य पश्चात् प्रतिष्ठमानस्य मे श्रवण तस्य भूषणध्वनिना हृतम्। गोपीभि सह हास-परिहास-विहारा प्रवृत्ता। कण्ठध्वनिना मे कर्णौ समुल्लसितौ जातौ। ईदृशे काले सर्वे यूय कोलाहल कुर्वन्तो बलात् मा धृत्वा इहानीतवन्त.।

भूमिम् अपि प्लावितां विधाय धावति ; गतिपथे ये सर्वे महामहीरुहादयः तस्य गतिपथम् अवरुन्धन्ति तान् अपि छिन्न-मूलान् विधाय स्रोतोऽभिमुख नयति । स च जलोच्छ्वासः यदा पुनः समुद्राभिमुखो भवति तदा उत्पाटितान् तान् वृक्षादीन् अपि समुद्र नयति । प्रभो॰ हृदयस्थितस्य श्रीराधाया मादनाख्य-महाभावस्य अपि तादृशी इव अवस्था । अय - प्रेमसमुद्रः प्रभुहृदये वर्तते, स्वीयरसेन प्रभो देहेन्द्रियादीनि च परि-षिञ्चति । इयं कथा रामानन्दरायसमीपे प्रभु॰ एव कथितवान् ।

"ताँर भावे भावित आमि करि आत्म-मन ।
तवे निज माधुर्य-रस करि आस्वादन ॥"

समुद्रससर्गिण्यो नद्य इव प्रभोः चित्तस्थितेन प्रेमसमुद्रेण सह तदीयसर्वाङ्गेषु अवस्थित. प्रेमरसः सश्लिष्टो वर्तते । श्रीकृष्ण-विषयकस्य कस्यचन व्यापारस्य स्फुरणेन प्रभो. चित्तस्थितः प्रेमसमुद्र॰ यदा उद्वेलो भवति, तदा तस्य प्रभावेन प्रभोः सर्वाङ्गस्थितः प्रेमरसः अपि उच्छ्वसितः सन् जलस्फारेण सह मिलितो बहिर्धावति ; तस्य एव गतिवेगेन प्रभो॰ अङ्गप्रत्यङ्ग-रूपाणा वृक्षादीनाम् अस्थिग्रन्थिरूप मूलं छिन्नम् इव भवति, अङ्गप्रत्यङ्गादीनि जलस्फारप्रवाहाभिमुख चालितानि भवन्ति, केवलं शिथिलीकृतचर्मबन्धनेन देहेन सह सबद्धानि तिष्ठन्ति । तस्मात् एव प्रभो॰ देह. अद्भुत दैर्घ्य धत्ते । केनचित् कारणेन यदा पुनः प्रेमप्रवाहः हृदयाभिमुखं धावति , यद्वा हृदयस्थितः प्रेमसमुद्रो देहस्थित प्रेमरस यदा स्वाभिमुखम् आकर्षति (पृ० ११३) तदा तस्य गतिवेगेन अङ्गप्रत्यङ्गादीनि अपि अन्तः प्रविशन्ति, तदा एव च प्रभोः देहः अद्भुता कूर्माकृति धत्ते ।

प्रभु स्वय भगवान्, सर्वशक्तिमान्। पर राधाप्रेम्ण उद्दाम प्रभावं वारयितु तस्य अपि शक्तिः नास्ति। प्रभोः देहस्य बहि. तस्य श्यामदेहम् आवृत्य रक्षाकवचम् इव वर्तते श्रीराधाया गौरदेह। प्रभोः अस्थिग्रन्थे चर्मावरण यदा शिथिल सङ्कुचित वा भवति, तदा तत्तत्स्थानीय. श्रीराधा-देहः अपि नून शिथिल. सङ्कुचितो वा भवति। मादनघन-विग्रहा मादनाधिष्ठात्री श्रीराधा अपि किं प्रेमप्रभाव संवरीतुं न शक्नोति ?

व्रजलीलाया स्वीयचित्तस्थित-मादन-प्रेम्ण. प्रभावेन श्रीराधा-देहस्य दीर्घाकृतिधारण कूर्माकृतिधारण वा न श्रूयते। कविराजगोस्वामी अपि लिखितवान्—

लोके नाहि देखे ऐछे, शास्त्रे नाहि शुनि।
हेन भाव व्यक्त करे न्यासिशिरोमणि ॥

श्रीचै, च, ३।१४।७६॥

एतेन ज्ञायते व्रजलीलाया श्रीराधा स्वीयप्रेमप्रभाव संवरीतुं शक्नोति। स्थिते अपि मादन-प्रभाव-संवरणसामर्थ्ये यत् सा गौर-लीलाया तत्सामर्थ्यं न प्रकटीकरोति, तत्र, स्वीयप्रेम्ण अद्भुत-प्रभाव ज्ञापयित्वा श्रीकृष्णस्य किञ्चिदपूर्णवासनापूरणम् एव हेतुः सम्भाव्यते। अकृते तु मादनस्य प्रभावसंवरणे प्रभो. देहः दीर्घाकार कूर्माकार वा न धारयेत्, प्रेम्ण अयम् अद्भुत. प्रभावः अपि तस्य अज्ञात स्यात्। यद्वा, एतत् अपि भवितुम् अर्हति—गौरलीलाया मादनाख्यमहाभावो यथा अपूर्वाम् उद्दामतां लभते न तथा व्रजलीलायाम्। अथ यदि लभेत अपि, तर्हि अस्य कारणम् इत्थम् उन्नेयम्—गौरलीलाया श्रीराधा-कृष्णयो-

सम्मिलिता बलवती उत्कण्ठा ; श्रीकृष्णमाधुर्यस्य (पृ० ११४) आस्वादनार्थं गौरकृष्णस्य बलवती उत्कण्ठा ; तन्माधुर्यास्वादनं कारयित्वा प्राणवल्लभस्य वासनापूरणार्थं श्रीराधाया बलवती उत्कण्ठा च। एताभिः सम्मिलिताभिः उत्कण्ठाभिः प्रभोः हृदयस्थितं प्रेम तथा उद्दामं सञ्जातं येन श्रीराधा अपि तस्य प्रभावं संवरीतुम् असमर्था बभूव। इत्थं स्वीयदेहे श्रीराधाप्रेम्णः अद्भुतम् एकम् असंवरणीयं प्रभावम् अनुभूय प्रभुः राधाप्रेममहिम्नः अन्याम् एकां वैचित्रीम् उपलब्धवान्।

अनेन प्रकारेण राधाप्रेममहिमानम् आस्वाद्य प्रभुः स्वीयाम् अन्याम् अपूर्णां वासनां पूरयामास।

---

## सूद्दीप्तः सात्त्विकभावः प्रभोः राधास्वरूपत्वं च।

सात्त्विकभावपदेन प्राकृतसत्त्वात् सम्भूतो भावो न प्रतीयते। पारिभाषिकः अयं 'सात्त्विकभाव' शब्दः, यस्मात् च "सत्त्व'शब्दात् 'सात्त्विक'पदं परिनिष्पन्नं सः अपि पारिभाषिकः (विशेषार्थद्योतकः) शब्दः।

सत्त्वम्—

> कृष्णसम्बन्धिभिः साक्षात् किञ्चिद् वा व्यवधानतः।
> भावैश्चित्तमिहाक्रान्तं सत्त्वमित्युच्यते बुधैः॥
>
> भक्तिरसामृतसिन्धुः २।३।१॥

साक्षाद् वा किञ्चिद् व्यवधानाद् वा समुद्भूतै. कृष्णसम्बन्धिभिः भावैः आक्रान्त चित्त सत्त्वम् इत्यर्थ । एतेन अवस्थाविशेपापन्न चित्त सत्त्वम् इति प्राप्तम् । श्रीकृष्णेन सह यथोक्तसम्बन्ध-वशात् (पृ० ११५) भक्तचित्ते ये भावा उदयन्ते तै आक्रान्ते चित्ते पूर्वोक्त अवस्थाविशेषो जायते ।

सात्त्विकभाव.—

"सत्त्वादस्मात् समुत्पन्ना ये भावास्ते तु सात्त्विका ।

भ, र, सि, २।३।२ इति ।

चित्ते कृष्णप्रेम्ण' कृष्णरतेः वा आविर्भावे जाते एव श्रीकृष्णेन सह सम्बन्धो जायते न अन्यथा । अतो जातप्रेम जातरति भक्तचित्तम् एव कृष्णसम्बन्धिभिः भावैः आक्रान्त भवितु शक्नोति । एते भावा अपि प्रेम्ण एव समुद्भूता । प्रेम्ण एव उद्भूतै' एभि भावै यदा चित्तम् आक्रान्त भवति, तदा वहि—भक्तदेहे अपि कानिचन लक्षणानि प्रकाशन्ते, एतानि लक्षणानि अनुभाव उच्यते । अनुभावद्वारा एव चित्त-स्थितस्य भावस्य अस्तित्वम् अनुमीयते—

"अनुभावास्तु चित्तस्थभावानामवबोधकाः" भ, र, सि, २।२।१

चित्तस्थितस्य प्रेम्ण. प्रेमजातभावस्य वा यानि लक्षणानि बहि प्रकाशन्ते तेषा कानिचन अत्र उल्लिख्यन्ते—नृत्य-गीत-भूलुण्ठन-चीत्कार-गात्रमोटन–हुङ्कार-जृम्भण-दीर्घश्वास–लाला–स्रावाट्टहासादय अश्रु-कम्प-पुलकादयश्च ।

एतानि बहिर्लक्षणानि द्विविधानि । तत्र कानिचन भक्तेच्छाधीन-प्रकाशाप्रकाशानि—भक्तेच्छया प्रकाशन्ते न वा

प्रकाशन्ते । यथा—नृत्य-गीत-भूलुण्ठन-चीत्कार-हुङ्कारादयः । नृत्यगीतादीनाम् इच्छा चेतसि जागर्तु नाम, परम् इच्छा चेत् भक्तः तान् न कुर्यात् अपि । अत एते बुद्धिपूर्वक अनुभाव इत्युच्यते । अन्ये कानिचन लक्षणानि सन्ति यानि स्वयं स्फुरन्ति । एतानि यदा सम्यक् (पृ० ११६) विकाश लभन्ते तदा भक्त इच्छया अपि एतानि निरोद्धु न शक्नोति, यथा—अश्रु-कम्प-पुलक-स्तम्भादय. ।

इत्थ ज्ञात सर्वे बाह्यविकारा एकस्मात् सत्त्वात् समुत्पन्ना अपि केचन बुद्धिपूर्वकप्रवृत्तिवशात् जाता. केचन च स्वाभाविकाः इति । तथा च भक्तिरसामृतसिन्धुटीकाया श्रीजीवः (२।३।२) —नृत्यादीना सत्यपि सत्त्वोत्पन्नत्वे बुद्धिपूर्विका प्रवृत्तिः, स्तम्भादीना तु स्वत एव प्रवृत्तिरित्यस्य नृत्यादिषु न व्याप्ति इति ।

एवञ्च बुद्धिपूर्विकाया. प्रवृत्तेः जाता बाह्यविकाराः स्वाभाविका बाह्यविकाराश्च—एते उभये एव चित्तस्थितभावस्य परिचायका इति कृत्वा उभयेषाम् एव अनुभावत्वं वर्तते । तथापि द्वयो. श्रेण्यो पार्थक्यसूचनाय बुद्धिपूर्विकाया प्रवृत्तेः जाता नृत्य-गीत-विलुण्ठनादय. "उद्भास्वरानुभाव' इति 'अनुभाव' इति वा उच्यते । अश्रु-कम्प-पुलक-स्तम्भादय. तु स्वाभाविकबाह्यविकाराः "सात्त्विकभावा" इत्युच्यते ।

सात्त्विकभावानाम् उत्पत्तिम् अधिकृत्य भक्तिरसामृतसिन्धौ उक्तम्—

चित्त सत्त्वीभवत् प्राणे न्यस्यत्यात्मानमुद्भटम् ।
प्राणस्तु विक्रिया गच्छन् देहं विक्षोभयत्यलम् ॥

तदा स्तम्भादयो भावा भक्तदेहे भवन्त्यमी ।
ते स्तम्भस्वेदरोमाञ्चा स्वरभेदोऽथ वेपथु ॥
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका स्मृता ।
चत्वारि क्ष्मादिभूतानि प्राणो जात्ववलम्बते ॥
कदाचित् स्वप्रधान सन् देहे चरति सर्वत ।
स्तम्भं भूमिस्थित प्राणस्तनोत्यश्रु जलाश्रय. ॥
तेजस्थ स्वेद-वैवर्ण्ये प्रलय वियदाश्रित । (पृ० ११७)
स्वस्थ एव क्रमान्मन्दमध्यतीव्रत्वभेदभाक् ।
रोमाञ्च-कम्प-वैस्वर्याण्यत्र त्रीणि तनोत्यसौ ॥ इति ।

भ, र, सि, २।३।३-८

चित्त यदा सत्त्वत्व (कृष्णसम्बन्धिभावै आक्रान्तत्व) लब्ध्वा चञ्चल मन प्राणे समर्पयति, प्राणो विकारापन्न देहम् अतिशय क्षोभयति तदा एव भक्तदेहे स्तम्भादय. सात्त्विका भावा उत्पद्यन्ते ।

**सात्त्विकभावाः** अष्टौ—स्तम्भस्वेदादय (श्लोकोक्ता) ।

कदाचित् प्राण क्षिति जल तेज आकाशम्—इति देहस्थितानि चत्वारि भूतानि अवलम्बते, कदाचित् च स्वय प्रधानो भूत्वा (वायुम् आश्रित्य) देहे सर्वत्र विचरति ।

प्राणो यदा क्षितिस्थो भवति तदा स्तम्भ, यदा जलस्थः तदा अश्रु, यदा तेजस्थ तदा स्वेद वैवर्ण्य च यदा आकाशस्थ तदा प्रलय (मूर्छा) विस्तारयति । यदा च प्राण वायौ एव तिष्ठति तदा क्रमेण मन्द-मध्य-तीव्रत्वादिभेद प्राप्त. रोमाञ्च. कम्प स्वरभेदश्च—इति त्रय प्रकाशयति । इति श्लोकार्थ. ।

एते सात्त्विका भावा सुस्पष्टम् एव बाह्यदेहस्य अन्त -करणस्य च क्षोभम् उत्पादयन्ति । वस्तुतः पुन. अन्त -करणक्षोभस्य बहिर्विकाश एव बाह्यिकदेहस्य क्षोभः । अन्त.-करण विशेषेण विक्षुब्ध करोति इति हेतोः सात्त्विकभाव. प्रायेण असवरणीयो भवति ।

वाहुल्योक्तिरिय यत् कारणान्तरेण अपि लोकानाम् अश्रुकम्पादयो दृश्यन्ते ; केचन वा अभ्यासद्वारा अपि अश्रु-कम्पादीन् प्रकाशयन्ति—यथा (पृ० ११८) अभिनेतार । पर केवल कृष्णसम्बन्धिभावप्रभावेन उद्भूता अश्रुकम्पादय एव सात्त्विकभावा , नान्ये ।

यदस्तु, चित्तस्थितस्य प्रेम्णो गाढ़तातारतम्येन चित्तस्य उपरि कृष्णसम्बन्धिभावाना प्रभावे अपि तारतम्य भवति । तेन सात्त्विको भाव उत्तरोत्तर वृद्धि प्राप्य धूमायितः, ज्वलितः, दीप्त', उद्दीप्त , सूद्दीप्तः इति पञ्च वैचित्री' धारयति ।

**धूमायितः सात्त्विकः** । य' सात्त्विकः स्वयम् अपरेण केनचित् सात्त्विकभावेन सह मिलित अल्पमात्रम् अभिव्यक्तो वा भवति, यस्य च विकाश. गोपयितु शक्य. स धूमायित ।

**ज्वलितः सात्त्विकः** । द्वित्रा सात्त्विकभावा यदि एकदा एव उदयन्ते यदि च तेषा गोपन दुष्कर भवति तर्हि ते ज्वलितसात्त्विका. ।

**दीप्तसात्त्विकः** । प्रवृद्धाः त्रिचतुरा सात्त्विकभावा यदि युगपदुदिता भवन्ति ते च यदि सवरीतुम् अशक्या भवन्ति तर्हि ते दीप्तसात्त्विका' ।

**उद्दीप्तसात्त्विकः** । यदि पञ्चषा वा सर्वे वा सात्त्विक-

भावा युगपत् उदिता भूत्वा परमोत्कर्ष प्राप्नुवन्ति तर्हि ते उद्दीप्तसात्त्विका उच्यन्ते ।

**सूद्दीप्तसात्त्विकः** । सु+उद्दीप्त =सूद्दीप्त सम्यक् उद्दीप्त । महाभावे सर्वे सात्त्विका भावा सम्यक् उद्दीप्ताः सन्त उद्दीप्ततायाः परा काष्ठा यदि लभन्ते तदा ते सूद्दीप्तसात्त्विका. कथ्यन्ते ।

"उद्दीप्ता एव सूद्दीप्ता महाभावे भवन्त्यमी ।
सर्व एव परा कोटिं सात्त्विका यत्र बिभ्रति ॥
भ, र, सि, २।३।४७॥"

श्लोके 'महाभावे' इत्यनेन (पृ० ११९) केवल महाभावे एव सात्त्विकभावाः सूद्दीप्ता भवन्ति, नान्यत्र इति ज्ञायते ।

प्रेम क्रमशो गाढता प्राप्त प्राप्त, स्नेहो मान. प्रणयो राग. अनुरागो महाभावश्च—इत्येतेषु परिणत भवति । श्रीकृष्ण-परिकरान् विना अन्येषु स्नेह-मान-प्रणयादयो न आविर्भवितु शक्नुवन्ति । श्रीकृष्णपरिकराणा मध्ये अपि केवल कृष्ण-कान्तासु गोपसुन्दरीषु एव महाभावस्य अस्तित्व न त्वन्यत्र । पूर्वं सूद्दीप्तसात्त्विकस्य यत् लक्षणम् उक्त तत् केवल महाभाववतीषु गोपसुन्दरीषु एव सम्भवति, न अन्यत्र, एत-दपि ज्ञातम् ।

पर सर्वासु गोपसुन्दरीषु एव न सात्त्विकभावा. सूद्दीप्ता भवन्ति, श्रीराधायाम् एव च सूद्दीप्ता भवन्ति, इत्येतत् इदानीम् आलोच्यते ।

महाभाव अपि गाढतां प्राप्तः प्राप्त कतिपय स्तरम्

अतिक्रम्य गच्छति । महाभावस्य द्वौ स्तरौ—रूढ. अर्धरूढश्च । यत्र सात्त्विका भावा उद्दीप्ता भवन्ति स रूढमहाभाव उच्यते । "उद्दीप्ताः सात्त्विका यत्र स रूढ इति भण्यते ॥" (उज्ज्वलनीलमणौ स्थायिभावप्रकरणे, १४४) । यत्र च रूढभावोक्तात् अनुभावसमूहात् (लक्षणसमूहात्) अपि सात्त्विकभावा अनिर्वचनीया विशिष्टदशा प्राप्नुवन्ति स. अधिरूढमहाभाव उच्यते ।

रूढोक्तेभ्योऽनुभावेभ्य कामप्याप्ता विशिष्टताम् ।
यत्रानुभावा दृश्यन्ते सोऽधिरूढो निगद्यते ॥

उ. नी, स्था, १२३॥

अत्र या अनिर्वचनीया विशिष्टदशा उक्ता सा न सूद्दीप्तदशा । "अनुभावा. सात्त्विका कामप्यनिर्वचनीया विशिष्टता प्राप्ता·, न तु सूद्दीप्ता इत्यर्थ ।—टीकाया विश्वनाथचक्रवर्ती ।" एतेन ज्ञातम्, अधिरूढमहाभावे अपि सर्वे सात्त्विकभावाः सूद्दीप्ता न भवन्ति इति । (पृ १२०)

यद् अस्तु, गाढता प्राप्य प्राप्य अधिरूढमहाभाव अपि पूर्व मोदने परस्ताच्च मादने परिणमति । मोदने श्रीराधाकृष्णौ उद्दीप्तसात्त्विकभावमय सौष्ठव धारयत. । "मोदन स द्वयोर्यत्र सात्त्विकोद्दीप्तसौष्ठवम् ॥ उ, नी, स्था १२५॥" मोदने अपि सात्त्विकभावाः सूद्दीप्ता न भवन्ति, केवलम् उद्दीप्ता एव भवन्ति—एतत् अपि विज्ञातम् । ह्लादिनीसार प्रेमा यदि रत्यादिमहाभावान्ताना सर्वेषा भावानाम् उद्गमेन उल्लासशीलो भवति तदा स मादन इत्युच्यते । अथ परात्

पर—पूर्वोक्तात् प्रेमस्तरसमूहात् अपि उत्कृष्टतर इत्यर्थः।
अय मादन. श्रीराधाया अन्यत्र न , दृश्यते ।

सर्वभावोद्गमोल्लासी मादनोऽयं परात् पर.।
राजते ह्लादिनीसारो राघायामेव य. सदा ॥
उ, नी, स्था, १५५॥

अत्र यो मोदन उक्त, श्रीकृष्णविरहावस्थाया स एव मोहननाम्ना ख्यातो भवति, विरहवैवश्यवशेन च मोहने एव सात्त्विकभावा सूद्दीप्ता भवन्ति ।

मोदनोऽयं प्रविश्लेपदशाया मोहना भवेत् ।
यस्मिन् विरहवैवश्यात् सूद्दीप्ता एव सात्त्विकाः ॥
उ, नी, स्था, १६०॥

एतेन विज्ञात केवल मोहने एव सात्त्विका भावा. सूद्दीप्ता भवितुम् अर्हन्ति, मोदने अपि सूद्दीप्ता न भवन्ति। पूर्वोद्धतस्य "रूढोक्तेभ्योऽनुभावेभ्य" इत्यादिश्लोकस्य टीकाया श्रीपादविश्वनाथचक्रवर्ती तथेव लिखितवान्—

अनुभावा सात्त्विका कामप्यनिर्वचनीया विशिष्टतां प्राप्ता न तु सूद्दीप्ता इत्यर्थं । तेषा मोहन एव वक्ष्यमाणत्वात् । इति ।

मोहनभाव पुन वृन्दावनेश्वर्या राधिकायाम् एव प्राय समुल्लसति, न अन्यासु व्रजसुन्दरीपु । "प्रायो वृन्दावनेश्वर्या मोहनोऽयमुदञ्चति" उ, नी, स्था, १३२ ॥" इत्युक्ते । (पृ० १२१)

सूद्दीप्तसात्त्विकभावो मोहनस्य एव विशेषलक्षणम्, मोहन. पुन. श्रीराधायाम् एव उदितो भवति, एवञ्च सूद्दीप्त-

सात्त्विकभावः श्रीराधाया अन्यत्र न शक्यदर्शनः इति तु स्पष्टं ज्ञातम् ।

श्रीमन्महाप्रभौ [सूद्दीप्तसात्त्विकस्य लक्षणं यदि दृष्टचरं, तर्हि असंशयम् एव ज्ञातव्यं यत् महाप्रभुः श्रीराधाभावेन आविष्ट आसीत् इति ।

श्रीमन्महाप्रभो. सूद्दीप्तसात्त्विकभावविषये बहवो वृत्तान्ताः श्रीश्रीचैतन्यचरितामृतग्रन्थे दृश्यन्ते । अत्र कतिचन उल्लिख्यन्ते ।

नीलाचले रथयात्राकाले प्रभुः रथाग्रे नृत्यति । अष्टौ सात्त्विकभावाः प्रभो देहे युगपत् सूद्दीप्ता अभवन् । पुलकेन रोममूल व्रणाकारम् अधारयत्, देहः कण्टकितः शाल्मली इव व्यराजत । कम्पात् दन्तसमूहा एतावता वेगेन कम्पन्ते येन मनसि जायते यत् दन्ता स्खलन्ति इति । प्रस्वेदेन सर्वेभ्यः अङ्गेभ्यः एतावता वेगेन घर्मो बहिर्भवति येन घर्मेण सह शोणितम् अपि क्षरति । स्वरभेद. तथा तीव्रः अभवत् येन "जगन्नाथ" इति वक्तुम् इच्छन् गद्गदस्वरत्वात् केवल "जज गग, जज गग" इति वक्ति । अश्रु जलयन्त्रधारा इव तीव्र-वेगेन प्रभूतं बहिर्भवति । प्रभु भ्रमन् नृत्यति । तया अश्रु-धारया चतुर्दिक्षु लोकाः तथा सिक्ता भवन्ति यथा स्नानोत्तीर्णा इव दर्शकेषु प्रतिभान्ति । वैवर्ण्यात् प्रभो उज्ज्वलस्वर्णकान्तिः कदाचित् रक्तवर्णा कदाचित् वा मल्लिकापुष्पशुभ्रा जायते । स्तम्भवशात् प्रभु कदाचित् वा शुष्ककाष्ठखण्डवत् भमौ पतति, हस्तपादं निश्चलम् । प्रलयवशात् भूमौ पतित-स्तिष्ठति, श्वासप्रश्वासहीन. । कदाचित् वा मुखात् फेनो बहिर्गतो भवति । (पृ० १२२)

उद्दण्ड नृत्ये प्रभुर अद्भुत विकार ।
अष्ट सात्त्विक भावोदय हय समकाल ॥
मांसव्रणसह रोमवृन्द पुलकित ।
शिमुलेर वृक्ष येन कण्टके वेष्टित ॥

एकेक दन्तेर कम्प देखि लागे भय ।
लोके जाने—दन्त सब खसिया पडय ॥
सर्वाङ्गे प्रस्वेद छुटे—ताते रक्तोद्गम ।
"जज गग जज गग" गद्गद वचन ॥

जलयन्त्रधारा येन वहे अश्रुजल ।
आश पाश लोक यत भिजिल सकल ॥
देहकान्ति गौर कभु देखिये अरुण ।
कभु कान्ति देखि येन मल्लिकापुष्पसम ॥

कभु स्तब्ध, कभु प्रभु भूमिते पडय ।
शुष्ककाष्ठसम हस्तपद ना चलय ॥
कभु भूमि पडे कभु हय श्वासहीन ।
याहा देखि भक्तगणेर हय प्राण क्षीण ॥

कभु नेत्रनासाजल मुखे पडे फेन ।
अमृतेर धारा चन्द्रबिम्बे पडे येन ॥

श्रीचै, च, २।१३।९६-१०४

प्रभु. यदा सर्वप्रथमम् एकाकी जगन्नाथदर्शनार्थम् अगच्छत्, तदा श्रीजगन्नाथम् आलिङ्गितुम् उपक्रममाण. प्रेमावेशात् भूमौ पपात । दैवात् सर्वशास्त्रविशारद सार्वभौमभट्टाचार्य. तत्र अवर्तत । प्रभो सौन्दर्यं प्रेमविकारं च दृष्ट्वा स विस्मितः अभवत् । अचेतनः प्रभु. वहुकाल भूमौ पतितो वर्तते । (पृ० १२३) सार्वभौमः निजजनद्वारा प्रभु वाहयन् स्वगृहम् अनयत्,

पूतस्थाने अशाययत् च । प्रभोः श्वासः प्रश्वासः च नास्ति, उदरस्पन्दनम् अपि नास्ति । भट्टाचार्यः चिन्तान्वितो जातः । सूक्ष्मतूलं प्रभोः नासिकाग्रे स्थापितवान्, तूलं ईषत् स्पन्दते, तदा स आश्वस्तः संवृत्तः । तदा शास्त्रज्ञो भट्टाचार्यः विचार्य स्थिरीकृतवान्—अस्य अपूर्वदर्शनस्य नवीनसन्न्यासिनः देहे—"सूद्दीप्त सात्त्विक एइ, नाम ये प्रलय ।।"

वसि भट्टाचार्य मने करेन विचार ।
एइ कृष्णमहाप्रेमेर सात्त्विक विकार ।।
सूद्दीप्त सात्त्विक एइ—नाम ये प्रलय ।
नित्यसिद्ध भक्ते से सूद्दीप्त भाव हय ।।

श्रीचै, च, २।६।१०-११

प्रभोः देहे प्रकटीभूतः सूद्दीप्तसात्त्विकविकार एव निःसन्दिग्धभावेन प्रमाणयति यत् स राधाभावेन आविष्टः इति । पूर्वम् एव उक्तम्—श्रीराधया सह एकत्वे अप्राप्ते श्रीराधाभावग्रहणं न सम्भवति । एतत् अपि उक्तं यत् श्रीकृष्णात् अन्यः कोऽपि श्रीराधया सह एकत्वं लब्धुं न शक्नोति, यतः तौ एव एकात्मानौ, अतः श्रीश्रीगौरसुन्दरः श्रीश्रीराधाकृष्णमिलितस्वरूपम् इति केवलसूद्दीप्तसात्त्विकभावात् एव विज्ञायते ।

प्रभुः स्वयं भगवान् श्रीकृष्ण इति अपि स्वयं भगवत्तालक्षणद्वारा पूर्वं प्रमाणीकृतम्, स श्रीराधा अपि—पूर्वोक्तया आलोचनया, विशेषतः सूद्दीप्तसात्त्विकभावद्वारा—तद् अपि च प्रमाणीकृतम् (पृ० १२४) ।

———

## अस्त्राणि पार्षदाश्च

पूर्वालोचनया ज्ञातम्—श्रीमद्भागवतस्य "कृष्णवर्णं त्विषाकृष्ण" इति श्लोके वर्तमानकले उपास्यो गौरवर्ण-स्वयभगवान् "साङ्गोपाङ्गास्त्रपार्षद" इति विशेषित.। तथा च तस्य अङ्गानि उपाङ्गानि च तस्य अस्त्राणि पार्षदाश्च—तानि अस्त्राणा पार्षदाना च कार्य निर्वाहयन्ति इत्यर्थः। अस्य को भावः? कि तस्य अन्यानि अस्त्राणि अन्ये पार्षदा वा न सन्ति?

रसिकशेखरस्य स्वयभगवत. स्वरूपगतम् एक स्वकीय कार्यम् अस्ति—रसास्वादनम्। अप्रकटलीलायाम् इव प्रकटलीलायाम् अपि स रसास्वादन करोति। तदास्वाद्यो रस· तस्य लीलायाम् उत्सारितो भवति। परिकरान् विना लीला न भवति, अत. तस्य रसास्वादनार्थम् उभयलीलायाम् एव परिकराणाम् आवश्यकता। स लीलापरिकरै सह एव ब्रह्माण्डे अवतीर्णो भवति। श्रीमन्महाप्रभु अपि श्रीनित्यानन्दाद्वैतादिभि परिकरवृन्दै सह एव अवततार। परिकरा एव पार्षदाः।

प्रकटलीलाया रसिकशेखरस्य स्वयभगवतो रसास्वादनरूप स्वकीय कार्यम् अन्तरेण अपि अन्यत् एक कार्य वर्तते, तत् च ब्रह्माण्डस्थिताना जीवानां कल्याणसाधनम्। व्रजेन्द्रनन्दनरूपेण अवतीर्य स जीवलोके रागमार्गस्य भक्ति प्रचारितवान्। विशेषकलौ गौररूपेण अवतीर्णः स आपामरसाधारणेभ्य. प्रेमभक्तिवितरण करिष्यति इति यत् द्वापरे एव व्यासदेवस्य समीपे कथितवान् तत् अपि सप्रमाण पूर्वम्

( पृ० १२५ ) उक्तम्। अत एव गौररूपेण अवतरन् स सूचनायाम् एव सङ्कल्पम् अकरोत्—

चारिभावेर भक्ति दिया नाचाइमु भुवन।—

श्रीचै, च, १।३।१७

सः अन्यत् अपि सङ्कल्पितवान्—

आपनि आचारि भक्ति शिखाइमु सभारे।—

श्रीचै, च, १।३।१८

गौरावतारे एतत् एव भगवतो जीवकल्याणात्मकं कार्यम्। प्रकटलीलाया भगवतो जीवकल्याणात्मके कार्ये अपि तस्य पार्षदा आनुकूल्य कुर्वन्ति। श्रीमन्महाप्रभु श्रीश्रीगौरकृष्णः स्वय यथा प्रेमभक्तिवितरण कृतवान् श्रीनित्यानन्दाद्वैतादि-स्वीयपार्षदद्वारा अपि तथा एव कारितवान् च। स्वयम् आचर्य यथा भजनस्य आदर्श स्थापितवान्, पार्षदद्वारा अपि तथा स्थापितवान् च।

अयं पिण्डितार्थ —श्रीश्रीगौरसुन्दर स्वीयपार्षदवृन्दै सह एव अवतीर्णवान्, तदीया. पार्षदा. तदीयलीलायाम् आनुकूल्यम् अकुर्वन् च।

एवम् अपि तस्य अङ्गप्रत्यङ्गानाम् अस्त्र-पार्षदत्व-कथनस्य तात्पर्यम् इद यत्, तस्य लीलापरिकरा. पार्षदवृन्दा अपि यथा अवतीर्णवन्त. तथा प्रकटलीलाया जीवकल्याणात्मक-कार्येषु तस्य अङ्गप्रत्यङ्गानि च अस्त्र-पार्षद-कार्यम् अकुर्वन् इति। कथम् इति? तत् उच्यते।

पूर्वम् एव कथितम्, तस्य अर्थात् तदीयाङ्गप्रत्यङ्गानां

दर्शनेन एव लोकाः प्रेमभक्ति लब्ध्वा धन्या जाताः। इत्थं तस्य अङ्गप्रत्यङ्गानि अपि प्रेमभक्तिवितरणलीलाया आनुकूल्य कृत्वा पार्षदकार्य चक्रुः। (पृ० १२६)

क्वचित् क्वचित् अवतारे भगवान् असुरसहारार्थम् अस्त्रेण सह अवतीर्णो भवति। इयम् अपि तस्य जीव-कल्याणात्मिका लीला। पूर्वम् एव कथितम् अस्मिन् अवतारे स. असुराणा सहार न कृतवान्, नामप्रेमवितरणद्वारेण असुराणा चित्तशुद्धि विधाय तेषाम् असुरत्वस्य विनाश कृतवान्। कस्य अपि प्राणविनाश कर्तव्यो न आसीत् इति तस्य अस्त्राणाम् अपि प्रयोजन न अभवत्। तस्य अङ्गाना दर्शनेन एव असुरा प्रेमभक्तिम् अलभन्त, तेषा चित्त-शुद्धिः सजाता इत्यत अनायासेन एव प्रतीयते यत् तस्य अङ्गप्रत्यङ्गानि एव अस्त्रकार्यम् अकुर्वन्।

अनेन रूपेण तस्य अङ्गानि प्रत्यङ्गानि च अस्त्र-पार्षद-कार्यं कुर्वन्ति इति हेतो. स "साङ्गोपाङ्गास्त्रपार्षद" कथित। अङ्गप्रत्यङ्गरूप-पार्षदान् विना लीलापरिकरा अपि तेन सह अवतीर्णा बभूवु।

---

कृतायाम् आलोचनायाम् उद्धृतेभ्य. शास्त्रप्रमाणेभ्य· स्फुट-तया एव ज्ञात यत् व्रजविलासी श्रीश्रीश्यामसुन्दरः नवद्वीप-विलासी श्रीश्रीगौरसुन्दरश्च एकम् एव अभिन्न परब्रह्मतत्त्वम् इति । तथापि तयोः एकस्वरूपात् अन्यस्वरूपस्य वैशिष्ट्यम् अस्ति । अस्य वैशिष्ट्यस्य दिग्दर्शनं किञ्चित् दीयते ।

(१) रसस्वरूपत्वम्—

परब्रह्म अधिकृत्य श्रुतया उक्तम्—"आनन्द ब्रह्म । रसो वै सः" इति । अन्यत् अपि उक्त सः (पृ० १२७) "सर्वरस"—सर्वरसाना समवायः अशेषरसामृतवारिधिः इति यावत् । रसशब्दतात्पर्यम् अज्ञात्वा एतेषा वचनानां ज्ञान न सम्भवति ।

'रस्' धातो. 'रस' शब्दो निष्पन्न·, आस्वादन धात्वर्थः । रसशब्दस्य द्वौ अर्थौ (कर्मसाधन-कर्तृसाधनभेदात्) । तत्र "रस्यते (आस्वाद्यते य. सः) इति रसः"—आस्वाद्य वस्तु, यथा मधु । अयम् एक. ( कर्मसाधन-रसशब्दस्य ) अर्थ । अन्यः अर्थ च "रसयति (आस्वादयति य स ) इति रस." रसास्वादक रसिको वा ; यथा भ्रमर· (इति कर्तृसाधनत्वे) । रसस्वरूप पर ब्रह्म आस्वाद्य रस. रसास्वादक, रसिक —इत्युभयम् अपि । यतः तत् ब्रह्मतत्त्व—सर्वबृहत्तम तत्त्व तस्मात् आस्वाद्यत्व रसिकत्व च इत्युभयम् एव तत्र निरतिशय-रूपेण विकशितम् । अनयो· विषययो. अपि तस्य समानः अधिकश्च कोऽपि नास्ति इति ज्ञातव्यम् ।

आस्वाद्य-रसस्य स्वरूपम् इदानी विविच्यते । साधारण्येन आस्वाद्य-वस्तुमात्रवाचक अपि रसशब्दः रसशास्त्रे आस्वाद्य-विशेषवाचक. । तथा च, यत्र आस्वाद्यवस्तुनि चमत्कारित्वं वर्तते स एव रस इत्युच्यते ,· यत रसशास्त्रे उक्तम् "रसे सार-श्चमत्कारो यद् विना न रसो रस." इति । चमत्कारित्वं च आस्वादनस्य, रसवस्तुनि अपरिहार्यम् एतत् । चमत्-कारित्वशब्दस्य अन्यः प्रतिशब्दो दुर्लभः । पूर्वं यत् न आस्वादितं यस्य आस्वादनवार्ता अपि न श्रुतपूर्वा ईदृशस्य वस्तुनः अनास्वादितपूर्वस्य माधुर्यस्य आस्वादनेन चित्तस्य या (पृ० १२८) स्फारता (विकाश ) भवति तत् एव चमत्कारित्वम् इत्युच्यते। वङ्गेषु "आ. कि चमत्कार" इत्यादिभाषया अस्य अभिव्यक्ति· क्रियते। आस्वाद्ये यत्र वस्तुनि एतादृश चमत्कारित्व वर्तते स एव आस्वाद्यो रस· इत्युच्यते ।

ईदृशस्य चमत्कारित्वस्य कियता परिमाणेन सता आस्वाद्यं वस्तु रसनाम्ना अभिधानीय भवति, रसशास्त्रे तत् अपि उक्तम् । आस्वादनजनित सुख यदि तथा अधिक भवति यथा आस्वादकस्य सर्वाणि बहिरन्त करणानि केवलम् आस्वादन-चमत्कारित्वे एव पिण्डीभूतानि भवन्ति, अन्येषु वस्तुषु तेपाम् अनुसन्धानम् एव न तिष्ठति तदा एव तत् चमत्कारि सुख रस इति कथ्यते। तथाच—

वहिरन्त करणयोर्व्यापारान्तररोधकम् ।
स्वस्वकारणसश्लेषि चमत्कारि सुख रस. ।।इति ।

(आस्वाद्य किञ्चन वस्तु कस्याम् अवस्थाया केन कारणेन चमत्कारित्व धत्ते, वाहुल्यभयात् तत् अत्र न लिखितम्) ।

लौकिको रस' अपि अस्ति, पर तत्र रसत्वस्य चमत्-कारित्वस्य वा नित्यत्व न अस्ति, परब्रह्म पुन नित्य वस्तु, तस्य रसस्वरूपत्वम् अपि नित्यम्, अत' तस्य आस्वादनचमत्-कारित्वम् अपि नित्यम् , एवम् अस्य आस्वादनचमत्कारि-त्वस्य पक्षे—आस्वादकस्य बहिरिन्द्रियाणाम् अन्तरिन्द्रियस्य च व्यापारान्तररोधकत्वम् अपि नित्यम् । इद चमत्कारित्वं नित्य नवनवायमानम्, अत. अस्य अवसान न भवति । नित्य-नवनवायमान-चमत्कारित्वमय नित्यनवनवायमान-माधुर्यसम-न्वितम् आनन्दस्वरूप परब्रह्म एव रस —आस्वाद्यो रस. । इदानीम् आस्वादको रसो विविच्यते । पूर्वम् एव कथितम्—रसस्वरूप पर ब्रह्म आस्वाद्यम् आस्वादकम् इत्युभयम् एव । तत् (ब्रह्म) किम् आस्वादयति ? नून तत् रसम् एव आस्वादयति, अन्यथा तत् (ब्रह्म) रसास्वादक रसिक वा न उच्येत । परं तत् क रसम् आस्वादयति ?

आनन्दस्वरूप ब्रह्म आनन्द-रसम् आस्वादयति । तदा-स्वाद्य आनन्दो द्विधा—स्वरूपानन्दः स्वरूपशक्त्यानन्दश्च । आनन्द स्वत एव मधुर., आस्वाद्य. । एव पूर्वम् एव कथित —तस्य स्वरूपशक्तेः प्रतिवैचित्र्यम् आनन्ददायिनी ह्लादिनी वर्तते, अत. तस्य स्वरूपशक्ति. अपि आस्वाद्या । ध्रुव ह्लादिन्या परिमाणस्य गाढतायाश्च तारतम्यानुसारात् आस्वाद्य-त्वस्य अपि तारतम्य भवति । परब्रह्म लीलापुरुषोत्तमः, अतः तस्य लीला वर्तते लीलापरिकराश्च वर्तन्ते। ह्लादिनी-प्रधाना स्वरूपशक्तिः पुन. प्रेमरूपेण अपि परिकराणा चित्तेषु वर्तते । अयं प्रेमा ह्लादिन्या वृत्तिः इति हेतो. स्वरूपत.

आस्वाद्यः। लीलाव्यपदेशेन परिकरभक्तानां चित्तस्थितः प्रेमरस उच्छ्वसित उत्सारितश्च भवति। अयं प्रेमा एव—स्वरूपशक्तेः वृत्तिः इति हेतोः—वास्तविकः शक्त्यानन्दः अथ प्रेमरस एव शक्त्यानन्दरसश्च।

स्वरूपशक्तिः परब्रह्मणः स्वरूपे शक्तिरूपेण परिकरभक्तविषयक-प्रीतिरूपेण च अवस्थिता वर्तते। ह्लादिनीप्रधानायाः स्वरूपशक्तेः सहायतया एव आनन्दस्य रसस्य वा आस्वादनं क्रियते।

ह्लादिनी कराय कृष्णे आनन्दास्वादन।
ह्लादिनी द्वाराय करे भक्तेर पोषण॥

श्रीचै, च, १।४।५३।

परब्रह्म श्रीकृष्णः ब्रह्मतत्त्वम्—सर्वबृहत्तम-तत्त्वम्, सर्वस्मिन् विषये एव स बृहत्तमः, कस्मिन् अपि विषये तस्य समानः तदपेक्षया अधिकश्च कोऽपि नास्ति। "न तत्समोऽभ्यधिकश्च कश्चित्" इति श्रुतेः। (पृ० १३०) रसरूपेण अपि स सर्वबृहत्तमः—आस्वाद्य-रसरूपेण अपि सर्वबृहत्तमः, असमोर्ध्वः, आस्वादकरसरूपेण च स सर्वबहत्तमः, रसिकशेखरः।

आस्वाद्यरसरूपेण तस्य स्वरूपगत आनन्दः असमोर्ध्व आस्वादनचमत्कारित्वमयो रसः। ह्लादिन्याः साहाय्येन स तम् आस्वादयति—स आत्मारामः।

सुखरूप कृष्ण करे सुख आस्वादन

श्रीचै, च, २।८।१२१।

पुनश्च, लीलाव्यपदेशेन परिकरभक्तानां प्रेमरसमाधुर्यम् अपि सः आस्वादयति, एतत् एव तस्य स्वरूपशक्त्यानन्दस्य आस्वादनम् ।

पूर्वम् एव उक्तम्—स "सर्वरसः—अशेषरसामृतवारिधिः, अनन्त-रसवैचित्रीसमवायः" इति । तस्य अनन्त-रसवैचित्र्या मूर्तिः एव राम-नारायण-नृसिहादीनि अनन्तभगवत्स्वरूपाणि । एतेषां भगवत्स्वरूपाणाम् अपि लीला. सन्ति । विभिन्ना रसवैचित्री पृथक्तया आस्वादयितुम् एव परब्रह्म अनादि-कालात् विभिन्न-भगवत्स्वरूपेण विराजते । प्रत्येकं भगवत्-स्वरूपाणि एव यथायथं स्वरूपानन्द शक्त्यानन्दं च आस्वा-दयन्ति । शक्तिविकाशतारतम्यानुसारात् एव रसवैचित्र्याः तारतम्यम्, रसवैचित्र्या मूर्तविग्रहाणा भगवत्स्वरूपाणाम् अपि तारतम्यम् । सर्वशक्तीना पूर्णतमविकाश', अत एव रसत्वस्य अपि पूर्णतमविकाश —परब्रह्मणि श्रीकृष्णे एव केवलम् ।

प्रत्येक भगवत्स्वरूपाणा स्वरूपानन्द एव परमास्वाद्यः स्वरूपानन्दान्तर्गतविग्रहमाधुर्यम् अपि परमास्वाद्यम्, परं श्रीकृष्ण-स्वरूपस्य स्वरूपानन्दो माधुर्यं च परमतमे आस्वाद्ये । श्रीकृष्ण-स्वरूपस्य माधुर्यम्—

कोटि ब्रह्माण्ड परव्योम ताँहा ये स्वरूपगण
वले हरे ता सभार मन। (पृ० १३१)
पतिव्रताशिरोमणि, यारे कहे वेदवाणी,
आकर्षये सेइ लक्ष्मीगण ।।

श्रीचै, च, २।२१।८८

अधिकन्तु, श्रीकृष्ण.—

आपन माधुर्य्ये हरे आपनार मन।
आपने आपना चाहे करिते आस्वादन ॥

श्रीचै, च, २।८।११४

तथा, प्रत्येक भगवत्स्वरूपाणा शक्त्यानन्द. परमतम-लोभनीयः।—किम् अन्यत् स्वय श्रीकृष्णस्य अपि परमतम-लोभनीय'। कस्मात् एवं भवति कथ च, तत् उच्यते।

ऐश्वर्यस्य ज्ञाने सति स्वभावत एव माधुर्यं सङ्कुचित भवति। अतो यासु लीलासु भगवति भगवत्परिकरेषु च ऐश्वर्यस्य ज्ञानम् अस्ति, तासु लीलासु माधुर्यस्य अप्रतिहतो विकाशो न सम्भवति। माधुर्यविकाशस्य तारतम्यानुसारात् एव लीलारससम्बन्धिन्याः लोभनीयताया अपि तारतम्यं भवति। अत एव यत्र पूर्णतमरूपेण वर्तमानस्य अपि ऐश्वर्यस्य ज्ञान नास्ति तत्र एव माधुर्यस्य अव्याहतो विकाश. लोभनीयताया अपि चरमतमो विकाशश्च।

परब्रह्म श्रीकृष्ण स्वरूपतो नरवपु नित्य-नरलीलश्च। व्रजधाम एव तस्य नरलीलास्थानम्। अस्या नरलीलाया माधुर्यस्य इव ऐश्वर्यस्य अपि पूर्णतमो विकाश, यत. लीला-विलासि परब्रह्म। परम् ऐश्वर्यस्य पूर्णतमे विकाशे सत्यपि माधुर्यस्य एव सर्वातिशायि प्राधान्य येन ऐश्वर्यं माधुर्यानुगतं सत् माधुर्यद्वारा स्वम् आच्छाद्य (पृ० १३२) माधुर्यम् एव सेवते, रसिकशेखरस्य रसास्वादिकाया लीलाया—अत एव रसास्वादनस्य—पुष्टिं विधाय सेवते। तत् च सेवाकार्य

स्वरूपम् अप्रकटीकृत्य करोति । अस्यां लीलायाम् ऐश्वर्यस्य ज्ञानं प्रच्छन्न तिष्ठति, माधुर्यम् एव सर्वतो देदीप्यमानं नित्य-नवनवायमानं च वर्तते । अत एव परब्रह्म अन्यभगवत्स्वरूपेण यां लीला करोति, तदपेक्षया स्वयरूपस्य लीला सर्वविषये उत्कर्षमयी ।

कृष्णेर यतक खेला, सर्वोत्तम नरलीला,
नरवपु कृष्णेर स्वरूप ।
गोपवेश वेणुकर, नवकिशोर नटवर
नरलीलाय हय अनुरूप ।।

श्रीचै, च, २।२१।८३

परब्रह्मणः श्रीकृष्णस्य अस्या सर्वोत्कर्षमय्यां नरलीलाया पुनः रासलीला सर्वलीलामुकुटमणिः ; यतः इय रास-लीला परमरसकदम्बमयी ; परम-रसाना युगपत् अभिव्यक्तिः केवल रासलीलायाम् एव भवति । इमा रासलीला लक्षीकृत्य श्रीकृष्ण. स्वयम् उक्तवान्—

सन्ति यद्यपि मे प्राज्या लीलास्तास्ता मनोहरा.।
न हि जाने स्मृते रासे मनो मे कीदृश भवेत् ।। इति ।

एतैः कारणै. एव कथितम्—परब्रह्मण' श्रीकृष्णस्य लीलाया यः शक्त्यानन्द उत्सारितो भवति स परमतम-लोभनीयः—स्वय श्रीकृष्णस्य अपि परमतम-लोभनीय । (पृ० १३३) रसस्वरूप. परब्रह्म-श्रीकृष्ण. इम परमतम-लोभनीयं शक्त्यानन्दम् अपि आस्वादयति । तस्मात् एव तस्य रसिकत्वम् ।

पूर्ववर्तिन्याम् आलोचनाया परब्रह्मणो रसस्वरूपत्वस्य अल्पमात्रम् आभास दातु यत्न कृत. । इदानी रसस्वरूपत्वे श्रीश्रीश्यामसुन्दर-श्रीश्रीगौरसुन्दरयो किं वैशिष्ट्यम् इति एतत् आलोच्यते ।

(२) **स्वरूपानन्दः** । पूर्वम् एव उक्त यत्, श्रीविग्रहस्य माधुर्यम् अपि स्वरूपानन्दस्य अन्तर्गतम् इति ।

श्रीश्रीश्यामसुन्दरस्य मदनमोहनरूपे एव माधुर्यस्य चरमतमो विकाशः । अनेन मदनमोहनरूपेण (मन्मथ-मन्मथरूपेण) एव स सर्वचित्ताकर्षक:, किम् अधिक, साक्षात् मदनम् अपि मोहयति ।

पुरुष योषित कि बा स्थावर-जङ्गम ।
सर्वचित्त-आकर्षक साक्षात् मन्मथमदन ॥

श्रीचै, च, २।८।११०

परं श्रीश्रीगौरसुन्दरस्य स्वरूपे यो माधुर्यविकाश. स तु मदनमोहनरूपमाधुर्यापेक्षयापि सर्वातिशायितया उन्मादजनक:— इति पूर्वम् उक्तम् ।

अत. स्वरूपानन्दविषये परब्रह्मण. श्यामसुन्दररूपापेक्षया गौरसुन्दररूपस्य एव उत्कर्ष. इति अत्र सशयस्य अवकाशो नास्ति । रसस्वरूपस्य परब्रह्मण कृष्णत्वस्य (सर्वचित्ताकर्षकत्वस्य) श्रीश्रीगौरसुन्दरस्वरूपे एव यत् पूर्णतमो विकाशः इति अपि न अत्युक्तिमात्रम् ।

(३) **आस्वादकरसस्वरूपम्** ।

(क) **स्वरूपानन्दस्य आस्वादकः रसिकः** । (पृ० १३४)

माधुर्यास्वादनस्य एकमात्र उपायः प्रेमा ; यः प्रेमाश्रयः स एव माधुर्यस्य आस्वादनयोग्यः—एतत् अपि पूर्वम् एव उक्तम् । आश्रयजातीय-प्रेम्णः अपि अनेके स्तराः सन्ति ; स्तरभेदेन माधुर्यास्वादस्य अपि तारतम्य भवति । पूर्णतम-विकाशमयस्तरस्य— मादनाख्यमहाभावस्य— आश्रयीभवता (जनेन) एव श्रीकृष्णमाधुर्यस्य पूर्णतमम् आस्वादनं सुसम्भवम् ।

पूर्वम् एव उक्तम्—श्रीश्रीश्यामसुन्दरकृष्णे अस्य मादनाख्यमहाभावस्य विकाशो नास्ति ; अतः स स्वीयं माधुर्यं पूर्णतमतया आस्वादयितुं न शक्नोति इति ।

पर

"रसराज महाभाव दुइ एक रूप"—

श्रीश्रीगौरसुन्दरकृष्णे मादनस्य पूर्णतमो विकाशः, अतः अत्र स्वरूपे एव रसस्वरूप-परब्रह्मणो माधुर्यस्य पूर्णतमम् आस्वादन सम्भवति ।

अत एव माधुर्यास्वादक-रसिकतया अपि श्रीश्रीश्याम-सुन्दरापेक्षया श्रीश्रीगौरसुन्दरस्य उत्कर्षं अवश्यस्वीकार्यं ।

(ख) **शक्त्यानन्दस्य आस्वादकः रसिकः ।** पूर्वम् उक्तं यत्, शक्त्यानन्दस्य आस्वादन नाम प्रेमरसनिर्यासास्वा-दनम् इति ।

श्रीश्रीश्यामसुन्दर-कृष्ण तस्य व्रजलीलाया चतुर्विध रसम् आस्वादयति—दास्य सख्यं वात्सल्य माधुर्यं च । तस्य एतच्चतुर्भावीया एव अनादिसिद्धा नित्यपरिकरा सन्ति । दास्यभावीय-परिकरैः सह (अनुष्ठितायाः) लीलाया दास्यरसः,

सख्यभावीय-परिकरै. सह लीलायां सख्यरस', वात्सल्यभावीय-परिकरै. सह लीलायां वात्सल्यरस , मधुरभावीय-परिकरैः सह लीलाया मधुररस उच्छ्वसित उत्सारितश्च भवति, स तान् स्वयम् अपि आस्वादयति स्वान् परिकरान् (पृ १३५) अपि तेषाम् आस्वादन कारयति। स प्रेम्णो विषयरूपेण, परिकराश्च आश्रयरूपेण तान् रसान् आस्वादयन्ति इति विशेषः। दास्यसख्यादीना वैचित्रीविशेषस्य आश्रयरूपेण अपि स रसास्वादन करोति , पर मधुरभावस्य मुख्यतमपरिकरभूताया' श्रीराधाया प्रेम्ण स केवल विषय , न तु आश्रय । अत श्रीराधाप्रेम्ण आश्रयरूपेण शक्त्यानन्दस्य यद् आस्वादन तत् श्रीश्रीश्यामसुन्दरस्य दुर्लभम् ।

श्रीश्रीगौरसुन्दर-कृष्ण राधा-श्यामयोः मिलित स्वरूपम् इति हेतो' तस्मिन् श्रीकृष्णभावो वर्तते श्रीराधाभावश्च वर्तते । स्वमाधुर्यस्य (श्रीश्रीश्मामसुन्दरमाधुर्यस्य) आस्वादनम् एव तस्य मुख्य स्वरूपानुबन्धि कार्यम् इति तत्र श्रीराधाभावविकाशस्य एव आधिक्य दृश्यते । श्रीकृष्णभावस्य विकाशो नास्ति इति अपि न । अत्र केचन दृष्टान्ता उल्लिख्यन्ते ।

श्रीश्रीगौरसुन्दर श्रीकृष्णभावम् आश्रित्य तैर्थिकब्राह्मणादीनाम् ईशानादीना च सेवया दास्यरसम्, रामाइ-सुन्दरानन्द-गौरीदासाभिरामादिभि सह सख्यरसम्, श्रीशचीमात्रा श्रीमिश्र-पुरन्दरेण च सह वात्सल्यरसम्, गदाधरादि-सहचरवृन्दै सह सुरधुन्या नौकाविलासादिना मधुररसम् अपि आस्वादितवान्। अत्र महाजनोक्तिः एव प्रमाणम् । गोष्ठलीलाया गौरचन्द्रे दृश्यते .—

"आजुरे गौराङ्गेर मने किभाव उठिल ।
धवली साङली वलि सघने डाकिल ॥
शिङ्गा वेणु मुरली करिया जयध्वनि ।
है है वलिया गोरा घुराय पाँचनि ॥"

पुनश्च :—

गौर किशोर, पूरव रसे गर गर,
मने भेल गोष्ठविहार ।
दाम, श्रीदाम, सुबल वलि डाकइ,
नयने गलये जलधार ॥
बेत्र विषाण, साज लेइ याजन,
यायव भाण्डीर समीप ।
गौरीदास; साज करि (पृ० १३०) तखने
गौर निकटे उपनीत ॥

शृङ्ग-वेणु-वेत्र-विषाण-भूषणैः सज्जितो दाम-श्रीदाम-सुबलादीन् सह कृत्वा 'है है' शब्देन धवली-श्यामलीप्रमुखा गाः प्रत्यावर्तयन् श्रीकृष्ण एव भाण्डीरादिवनसमीपे गोचारणार्थं गच्छति —श्रीराधा तु इत्थ गोचारणे न गच्छति। अत एव स्पष्टं ज्ञायते, पूर्वोक्तेषु (महाजन) पदेषु श्रीश्रीगौरसुन्दरस्य श्रीकृष्णभाव एव प्रकटित । सख्यभावोदाहरणम् एतत् ।

शैशवे श्रीश्रीगौरसुन्दरस्य मृद्भक्षण, कृष्ण-स्थाली (कालो हाँड़ि) स्तूपे उपवेशन, गृहवस्तूनाम् अपचयः, गङ्गाघट्टे दुर्वृत्त-व्यवहारकरणार्थं मिश्रपुरन्दरकर्तृकं तस्य शासन च, इत्येवमादि-बाल्यलीलायां तस्य श्रीकृष्णभावे वात्सल्यरसास्वादनस्य

अनेके दृष्टान्ता लभ्यन्ते। नीलाचले कृष्णजन्मयात्रायां गोपभावाविष्टेन तेन नन्दमहाराजन्वेशेन सज्जितस्य कानाइखुँटियानाम्न कस्यचन चरणवन्दनादिभि· अपि तस्य श्रीकृष्णभावे वात्सल्यरसास्वादनस्य परिचयः प्राप्यते।

श्रीकृष्णभावे मधुर रसास्वादनस्य दृष्टान्तः अपि महाजनान् पदकदम्बके दृश्यते। यथा, नौकाविलासस्य गौरचन्द्रे :—

ना जानि गौरचन्देर कोन् भाव मने।
सुरधुनीतीरे गेला सहचर सने॥
प्रिय-गदाधर आदि सङ्गेते करिया।
नौकाय चडिल गौर प्रेमावेश हैया॥
आपनि काण्डारि हया वाय नौकाखानि।
डुविल डुविल वलि सिञ्चे सव पानि॥"

पुनश्च :—

आरे मोर गौराङ्ग नाय।
सुरधुनी माझे याइया, नवीन नाविक हैया,
सहचर मेलिया खलाय॥
प्रिय गदाधर सङ्गे, पूरव रभस रङ्गे,
नौकाय वसिया करे केलि।
डुव डुव करे ना, वहाय विषम वा,
देखि हासे गोरा वनमाली॥"

अन्तिमे अत्र पदे "गोरा वनमाली" इत्युक्त्या स्पष्टम् एव प्रतीयते यत् प्रभुः कृष्णभावेन आविष्ट· अभूत् इति। गोरावनमाली इति गोरारूपो वनमाली (कृष्ण), वनमालिभावेन

(पृ० १३७) आविष्टः गोरा इत्यर्थः। विशेषतः, व्रजलीलायां श्रीकृष्ण एव यमुनागर्भे तरणी दत्त्वा "आपनि काण्डारी हैया" वाहितवान् विषमं वायुं प्रवाहयन् नौकां निमज्जत्कल्पां चकार च। श्रीराधा एवम् अकरोत् इति न ज्ञायते।

अतः परं, श्रीकृष्णस्य पूर्वरागोचित-गौरचन्द्रे इतः अपि परिस्फुटतया उल्लिखितम् अस्ति।

"आरे मोर गोरा द्विजमणि।
राधा राधा वलि कान्दे लोटाय धरणी॥
राधा नाम जपे गोरा परम यतने।
सुरधुनी धारा वहे अरुण नयने॥
खेने खेने गोरा अङ्ग भूमे गडि याय।
राधा नाम वलि खेने खेने मूरछाय॥"

राधाविरहेण कातरः श्रीकृष्णो यथा राधानाम जजाप, राधा राधा इति चक्रन्द भूमौ च लुलोठ, श्रीगौरसुन्दरस्य अपि स एव भावो यथोक्तपदेन व्यक्तीकृत.। श्रीश्रीचैतन्यचरितामृते अपि दृश्यते—

सुवल यैछे पूर्वे कृष्णसुखर सहाय।
गौरसुखदानहेतु तैछे राम-राय॥

—श्रीचै, च, ३।३।८

अत्र अपि नीलाचले श्रीश्रीगौरसुन्दरस्य श्रीकृष्णभावकथा एव कथिता।

इत्थं ज्ञातं, श्रीश्रीगौरसुन्दर. श्रीकृष्णभावे अपि शक्त्यानन्दम् आस्वादितवान्। तस्य राधाभावः तु अतिप्रसिद्धः, तत्र केचन दृष्टान्ता उल्लिखिता.।

अत एव शक्त्यानन्दस्य आस्वादनविषये अपि श्रीश्रीश्याम-सुन्दरापेक्षया श्रीश्रीगौरसुन्दरस्य उत्कर्षो दृश्यते। स्वरूपा-नन्दस्य आस्वादने अपि श्रीश्रीगौर (पृ० १३८) सुन्दरस्य य उत्कर्षः स तु पूर्वम् एव उक्त। एतस्मात् ज्ञात—रसास्वादन-व्यापारे श्रीश्रीश्यामसुन्दरापेक्षया श्रीश्रीगौरसुन्दरस्य एव उत्कर्षं, श्रीश्रीगौरसुन्दरस्य एव रसिकत्वस्य विकाश समधिक।

## (४) रसस्वरूपे विषयः आश्रयश्च।

परब्रह्मणो रसस्वरूपतया एव तत् परिकरभक्तस्य प्रेमरस-निर्यासम् आस्वादयति। इदम् आस्वादन द्विधा भवति—प्रेम्णो विषयरूपेण आश्रयरूपेण च;

श्रीकृष्णविषये उक्तम्—

नानाभक्तेर रसामृत नानाविध हय।
सेइ सब रसामृतेर विषय-आश्रय॥

श्रीचै, च, २।८।१११

श्रीश्रीश्यामसुन्दरकृष्णो भक्ताना सर्वरसस्य सर्वभावस्य वा—सर्वप्रेमस्तरस्य एव विषय इत्यत्र संशयो नास्ति। पर सः राधाया मादनाख्यप्रेम्णो न आश्रय, काम प्रेम्णः अन्य-स्तरस्य आश्रय।

पर श्रीश्रीगौरसुन्दर कृष्ण. राधाश्याममिलित स्वरूप-तया मादनस्य अपि आश्रय—सर्वप्रेमस्तरस्य एव विषयः आश्रयश्च। विषयः आश्रयश्च—इतीयम् उभयवैचित्री एव तस्मिन् पूर्णतमरूपेण विराजते।

अतः प्रेम्णो विषयतया, आश्रयतया च श्रीश्रीश्यामसुन्दरापेक्षया श्रीश्रीगौरसुन्दरस्य उत्कर्षः परिलक्ष्यते। श्रीश्रीश्यामसुन्दरः विषयप्रधान-स्वरूपम्। श्रीश्रीगौरसुन्दरः पुनः विषयाश्रय-स्वरूपम्। यद्यपि लीलाविषये सः आश्रयप्रधान-स्वरूपम् एव उच्यते।

## (५) रसस्वरूपत्वं परिकराश्च।

परब्रह्म रसस्वरूपम् अत एव लीला करोति—लीलारसा-स्वादनार्थम्। तत् (ब्रह्म) स्वीय-परिकरैः सह लीला करोति। (पृ० १३९) परिकराणां स्वरूपविचारेण अपि श्रीश्रीश्यामसुन्दर-श्रीश्रीगौरसुन्दरयोः वैशिष्ट्य दृश्यते।

श्रीश्रीश्यामसुन्दरस्य लीलाया भावभेदेन धामभेदो दृश्यते। परव्योम्नि तस्य ऐश्वर्यमयी लीला; द्वारका-मथुरयोः ऐश्वर्य-माधुर्यमिश्रिता लीला, व्रजे ऐश्वर्यज्ञानहीना शुद्धमाधुर्यमयी नरलीला। श्यामसुन्दस्य व्रजलीलाया देवभावापन्नः ऐश्वर्य-भावापन्नो वा कश्चित् परिकरो नास्ति, लक्ष्मीदेवी व्रज-लीलाया कान्ताभावेन श्यामसुन्दरस्य सेवाभिलाषिणी भूत्वा दुश्चरा तपस्याम् अपि चकार; पर सा सेवावसर न लब्धवती। कान्ताभावमयी लीला केवल गोपीत्वाभिमानिनीभिः सह एव संवृत्ता; ब्राह्मणवंशजाता यज्ञपत्न्य अपि सेवावकाश न लेभिरे।

श्रीश्रीगौरसुन्दरस्य लीलाया तु सर्वभावावलम्बिन. परि-करा दृश्यन्ते। श्रीवास-पण्डिते नारदस्वभाव., ऐश्वर्यात्मको भाव.; स श्रीश्रीलक्ष्मीनारायणस्य उपासक. आसीत्। श्रील-

मुरारिगुप्त रामचन्द्रस्य उपासक.। गौरगृहिणी श्रीश्रीलक्ष्मीप्रिया देवी वा व्रजपरिकरे न आस्ताम्। कविकर्णपूरमते श्रीश्रीलक्ष्मीदेवी स्वयं लक्ष्मी: (व्रजलीलायां तस्या अपूर्णा वासना कि नवद्वीपलीलायाम् एव यथाकथञ्चित् पूर्णा ? )। अन्ये पुन. मन्यन्ते, सा जानकी-रुक्मिण्यो मिलितविग्रह.। श्रीश्रीविष्णुप्रिया देवी—भूस्वरूपिणी सत्यभामा।

भावस्य प्रतिकूलतया ऐश्वर्यभावमयस्य वैकुण्ठस्य ऐश्वर्यमिश्रित-माधुर्यभावमय्या द्वारकायाश्च येषा परिकराणा श्रीकृष्णमाधुर्यास्वादनवासना तत्र तत्र धाम्नि अपूर्णा तिष्ठति, रसत्वस्य कारुण्यस्य च सर्वातिशायिविकाशमय. श्रीश्रीगौरसुन्दर. स्वीये धामनि परिकरत्व प्रदाय तेषा वासनाम् एव तेषाम् अपि आशातीतरूपेण पूरयति इति मन्ये। (पृ० १४०)

नवद्वीपलीलाया पुन. एकस्मिन् एव परिकरे द्वापरलीलाया एकाधिकपरिकराणा भाव: अवलोक्यते। यथा—श्रीलरायरामानन्द—अत्र पाण्डुपुत्रस्य अर्जुनस्य, श्रीश्रीश्यामसुन्दरस्य प्रिय-नर्मसखस्य अर्जुनस्य, व्रजस्य विशाखाया अर्जुनीयासख्या: सुवलस्य च भावो दृश्यते।

अनेन प्रकारेण दृश्यते—गौरपरिकरेषु भावस्य मिश्रणम् अस्ति, स्वरूपस्य मिश्रणम् अपि अस्ति, पर व्रजपरिकरेषु एव मिश्रण न दृश्यते।

भूयश्च, व्रजस्य कृष्णकान्ता गोपसुन्दर्य: नवद्वीपलीलाया पुरुषदेहेन विराजन्ते। यथा श्रील-गदाधर-पण्डित-गोस्वामी, स्वरूपदामोदर:, रायरामानन्द:, नरहरिसरकार-ठाकुर: श्रीश्रीरूपसनातनगोस्वामिप्रभृतयश्च। नवद्वीपे देहस्य पार्थक्ये

स्थिते अपि भावस्य पार्थक्यं नास्ति—व्रजे इव नवद्वीपे अपि तेषां कान्ताभावः—महाभावः। व्रजलीलायां कान्तारसास्वादने दैहिक-सम्भोगादयः अपि सन्ति, परं नवद्वीपलीलायां ते न सन्ति। एतत् एक वैशिष्ट्यम्। एतेन प्रतीयते—दैहिक-विलासः एव न आस्वादनीय वस्तु, आस्वादनीय वस्तु पुनः—भाव, प्रेमा। दैहिकविलासः प्रेमरस-निर्यासोत्सारणस्य एकतमम् उपायमात्रम्—एकमात्र उपायः अपि न (मूलकर्तृ-सम्पादित-श्रीश्रीचैतन्यचरितामृत—तृतीयसंस्करणस्य २।८। २३३-३४ पद्ययोः टीकापरिशिष्टस्य शेषांशे अत्र विषये किञ्चित् अस्ति)।

### (६) रसस्वरूपत्वं करुणा च

श्रील-कविराजगोस्वामी लिखितवान्—

रसिकशेखर कृष्ण परम करुण॥

श्रीचै, च, १।४।१५ (पृ० १४१)

तस्य रसिकशेखरत्वम् एव महान् गुणः परमकरुणत्वम् एव वा, इति निश्चित्य वक्तुं न शक्यते। मन्ये परमकरुणत्वम् एव तस्य सर्वश्रेष्ठो गुण। परमकरुणतया एव स भक्तवशः। तस्य भक्तवश्यता सर्वश्रेष्ठगुणः, दामबन्धनलीलाया तस्य प्रमाण प्राप्यते। यत भक्तवश्यता करुणात एव उद्भूता अतः करुणा एव सर्वश्रेष्ठगुणो वक्तव्या।

प्रकारान्तरेण दृश्यते चेत् तस्य रसिकशेखरत्व तस्य परमकरुणत्वस्यैव-अङ्गम् इति वक्तुं शक्यम्। परमकरुणतया एव स रसिकशेखरः। स यदि रसिको न अभविष्यत्, तस्य करुणा अपि पुष्टिलाभं न अकरिष्यत्; पत्रपुष्पैः शाखा-

प्रशाखाभिश्च सज्जिता न अभविष्यत् । भक्तः तस्य प्रीतिरसस्य भाण्डम् आदाय श्रीकृष्णसमीपे समागत. ; सेवाव्यपदेशेन स तस्य त रस परिवेश्य श्रीकृष्णम् आस्वाद्य कृतार्थतां लब्धुम् उत्कण्ठितो वर्तते । परमकरुणतया श्रीकृष्णो भक्तस्य इमं प्रीतिरसम् उपेक्षितु न अर्हति । स तम् अङ्गीकरोति, परमानन्देन आस्वादयति—केवल भक्तानन्दवर्धनार्थम् । स स्वमुखेन एव कथितवान्, तस्य यावत्यो लीलाः ताः सर्वा एव भक्तचित्तविनोदननिमित्तम्—

"मद्भक्ताना विनोदार्थं करोमि विविधा क्रिया ॥"

पद्मपुराणम् ।

अतो भक्तस्य आनन्दवर्धनेच्छया एव प्रीतिरसस्य आस्वादनम्, प्रीतिरसास्वादनेन च तस्य रसिकत्वम् । मुख्य भक्तस्य आनन्दवर्धनेच्छा—यस्या. करुणा मूलम्, रसास्वादन तु गौणम् । करुणावशेन भक्तचित्तविनोदनस्य इच्छा चेत् न अजनिष्यत भक्तस्य प्रीतिरसास्वादनेच्छा अपि न उदपत्स्यत । अत. तस्य रसिकशेखरत्व तस्य करुणामयत्वस्य अङ्गम् इति वक्तु युज्यते । (पृ० १४२)

अथ एवम् (विपरीतम्) अपि कि न स्यात्—रसिकशेखरतया एव स परम-करुण. , रसिक इति हेतो तस्य रसास्वादस्पृहा, रसास्वादनस्पृहापूरणार्थ च रसपात्र भक्त प्रति तस्य करुणा—इति । यदि एव स्यात् तर्हि रसिकशेखरत्वम् एव अङ्गि भवति, अङ्ग पुन: परमकरुणत्वम् ।

अत्र इद वक्तव्यम् । रसास्वादनस्पृहाया: परिपूरणार्थम् एव श्रीकृष्ण. प्रीतिरसपात्रं भक्त प्रति करुणा प्रकाशयति—

इति मनसि क्रियमाणे श्रीकृष्णे सङ्कीर्ण-स्वार्थपरताया आरोपः करणीयः स्यात् । सर्वबृहत्तमे ब्रह्मवस्तुनि सङ्कीर्णतायाः किञ्चित् अपि स्थानं न भवेत् । अन्यतरश्च, इत्थ मनसि क्रियमाणे भक्तान् प्रति अपि अविचार इव कृतः स्यात्—रसपरिवेशव्यापारे ते कृपाप्रत्याशा पुष्णन्त इव प्रतीयन्ते, तेषा रसपरिवेशनवासनायाः स्वतः स्फूर्तता न तिष्ठति इव ; परम् एतत् प्रीतिविरोधि। अन्ययापि दिशा अय विषयो विवेचनम् अर्हति । भगवन्तं प्रति भक्तस्य यथा प्रीतिः भक्तं प्रति अपि भगवतः तथा प्रीतिः ।

"साधवो हृदयं मह्यं साधूना हृदयन्त्वहम् ।
मदन्यत्ते न जानन्ति नाह तेभ्यो मनागपि ।।"

श्रीभा०, ९।४।६४।

इयं प्रीतिः स्वरूपशक्तेः वृत्तिः । अस्या वृत्ते. स्वाभाविकी गतिः परमुखी—विषयमुखी एव न तु आश्रयमुखी । अतः कविराजगोस्वामिना लिखितम्—

"प्रीतिविषयानन्दे आश्रयानन्द ।
ताहाँ नाहि निज सुख-वाञ्छार सम्बन्ध ।।"

श्रीचै, च, ९।४।१६९।।

भक्तो यथा भगवत्सुखमात्र वाञ्छति, भगवान् अपि तथा भक्तस्य सुखमात्र कामयते स्वसुखवासनाया गन्धमात्रम् अपि कस्य अपि मध्ये नास्ति । अत एव श्रीउज्ज्वलनीलमणिग्रन्थस्य सम्भोगप्रकरणे

"दर्शनालिङ्गनादीनामानुकूल्यान्निषेवया"

इत्यादिश्लोकस्य टीकायां श्रीपाद (पृ० १४३) विश्वनाथ-चक्रवर्तिना लिखितम्—

"आनुकूल्यात् परस्परसुखतात् पर्यन्त्वेन पारस्परिकात्" इति।

इयं पारस्परिकी सुखवासना उभयोः—भक्त-भगवतोः मध्ये एव स्वाभाविकी। प्रीतेः स्वरूपगतधर्मवशात् एव इत्थं भवति। रसास्वादनलालसया एव यदि भगवान् भक्त प्रति प्रीतिं कुर्यात् तर्हि तस्य भक्तप्रीतिः स्वसुखवासनाप्रसूता स्यात् स्वाभाविकी निरुपाधिका वा न स्यात्। वस्तुगत्या तु एकस्याः करुणाया एव भक्तप्रीते. उन्मेष, न रसास्वादनवासनायाः। भक्तस्य आनन्दवर्धनम् एव अस्या एक लक्ष्यम्; भगवतो भक्तप्रेमरसमाधुर्यस्य आस्वादनस्पृहा भक्तस्य आनन्दवर्धनेच्छाया एव अङ्गीभूता। इद तत्त्व प्रकाशयितुम् एव ब्रह्मा कथितवान्—भक्तस्य आनन्दसम्भारवर्धनार्थम् एव भगवान् अवतरति।

"प्रपञ्च निष्प्रपञ्चोऽपि विड़म्बयसि भूतले।
प्रपन्नजनतानन्दसन्दोहं प्रथितु प्रभो॥" श्रीभा, १०।१४।३७

अप्रकटलीलायाम् अपि इयम् एव तस्य स्वरूपगता प्रधानवासना, प्रकटलीलायाम् अपि। एभि· आलोचनै· प्रतीयते—रसिकशेखरत्वस्य अङ्गित्वकथन करुणत्वस्य च अङ्गत्वकथनं न सङ्गत भवति इति।

अय विषय न्यथा अपि विवेचितो भवितु युज्यते। भगवत. करुणा अपि तस्य स्वरूपशक्तेः एव वृत्तिः—अतः करुणा अपि मधुरा। तस्य रूपमाधुर्य यथा तस्य स्वरूपानन्दस्य एव अन्तर्गतम् एव करुणा अपि तस्य स्वरूपानन्दस्य अन्तर्भूता।

तस्य रसस्वरूपतया करुणा अपि परम-मधुरा। रूपम् इव करुणा अपि स्वतःस्फूर्ता। रसस्वरूपत्वेन सह रूपमाधुर्यस्य यथा भेदाभेदसम्बन्ध. करुणायाः करुणामाधुर्यस्य वा तथैव भेदाभेदसम्बन्ध.; रसस्वरूपत्वात् रूपमाधुर्य यथा अविच्छेद्यं करुणा अपि तथैव अविच्छेद्या। यत्र रसस्वरूपत्वस्य यावान् विकाशः (पृ० १४४) करुणाया अपि तावान् एव विकाशः। अतः यत्र रस-स्वरूपत्वस्य पूर्णतमो विकाशः तत्र करुणत्वस्य अपि पूर्णतमो विकाश.। एव यदि स्थित तर्हि रसस्वरूपत्व-करुणत्वयोर्मध्ये अङ्गाङ्गिभावप्रश्नः—कः कस्य हेतु. इति प्रश्न —न उत्थापनीयः।

यद् अस्तु, श्रीश्रीश्यामसुन्दरकृष्णापेक्षया श्रीश्रीगौरसुन्दर-कृष्णे रसस्वरूपत्वस्य विकाश. अधिक. इति पूर्वम् एव उक्तम्। अत एव श्रीश्रीश्यामसुन्दरकृष्णापेक्षया श्रीश्रीगौरसुन्दरकृष्णे करुणाविकाशेन अपि अधिकेन एव भाव्यम्। गौरकरुणायाः सर्वातिशायिविकाशस्य उज्ज्वलतमो दृष्टान्तः—निर्विचारं प्रेमवितरणम्।

श्रीश्रीश्यामसुन्दरकृष्ण. अपि प्रेमदानं करोति। पर न तत् साधारणतो निर्विचारम्। अत एव श्रील-कविराजगोस्वामिना लिखितम्—

कृष्ण यदि छुटे भक्ते भुक्ति-मुक्ति दिया।
कभु प्रेमभक्ति ना देय राखे लुकाइया॥

श्रीचै, च, १।८।१६

श्रीकृष्णात् भुक्तिं मुक्तिं वा लब्ध्वा एव यदि साधकः सन्तुष्टः स्यात्, स्वं परमकृतार्थं मन्येत, तथा सति श्रीकृष्णः

तस्मै पुन. प्रेमभक्ति न ददाति ; यत श्रीकृष्णः जानाति—भुक्ति मुक्तिः वा साधकस्य परमकाम्या, प्रेमभक्ति पुन न काम्या , अत. साधक प्रेमभक्तिलाभस्य योग्य. अपि न भवति । अत स तस्मै प्रेमभक्ति न ददाति । अत्र वितर्को दृश्यते ।

श्रीश्रीगौरसुन्दर पुन· प्रेमदानविपये एतादृश कम् अपि विचार न करोति, योग्यताया अयोग्यताया वा विचार विना एव स प्रकटलीलाया प्रेमभक्ति ददाति । य· प्रेम याचते (पृ १४५) तस्मै सर्वथा ददाति एव, य तु न याचते तस्मै अपि ददाति । "प्रेम दास्यामि" इति एव श्रीश्रीगौरसुन्दर. जानाति, "न दास्यामि" इति तु न जानाति ।

श्रीश्रीगौरसुन्दरस्य इद निर्विचार-करुणावैशिष्टच ख्यापयता एव श्रील-कविराजगोस्वामिना लिखितम्—

मागे वा ना मागे केहो—पात्र वा अपात्र ।
इहार विचार नाहि—जाने दिब मात्र ॥ श्रीचै, च, १।८।२७

यत् प्रेम दीयते तस्य अपि अपूर्व वैशिष्टच वर्तते । श्रीश्रीश्यामसुन्दर कान्ताप्रेम न ददाति श्रीश्रीगौरसुन्दर तत् अपि ददाति । अस्य कारणम् अपि अस्ति इति मन्ये ।

श्रीश्रीश्यामसुन्दरकृष्णः कान्ताप्रेम्ण., अखण्ड-भाण्डस्य न अधिकारी, श्रीश्रीगौरसुन्दरकृष्ण राधाकृष्णमिलितस्वरूपम् इति हेतो अखण्डप्रेमभाण्डस्य अधिकारी ; तस्मात् स "उन्नतोज्ज्वलरसस्वरूपा स्वभक्तिसम्पदं"—कान्ताप्रेम अपि निर्विचार यस्मै कस्मैचित् दत्तवान् । तस्मिन् तथा एव अधिक करुणाया विकाशः ।

श्रीश्रीगौरसुन्दरः स्वा करुणाम् एव स्वतन्त्राम् इव कृत्वा ताम् एव स्वपरिचालिकाम् इव अकरोत्। अत एव उक्तं कविराजगोस्वामिना—

एइ देख चैतन्येर कृपामहावल।
तार अनुसन्धान विना करये सफल॥ श्रीचै, च, २।१४।१४

श्रीश्रीगौरसुन्दरस्य अनुसन्धानं विना अपि तस्य कृपा जीव कृतार्थ करोति। (पृ १४६)

(मूललेखकस्य "श्रीश्रीगौरकरुणार वेशिष्टच" नाम्नि ग्रन्थे श्रीश्रीगौरसुन्दरस्य करुणावैशिष्टचम् अधिकृत्य किञ्चिद् विस्तृतम आलोचनं विहितं वर्तते)

### ('७) रस-स्वरूपत्वम् असुरसंहारश्च

रस-स्वरूपत्वस्य उत्कर्षवशात् श्रीश्रीगौरसुन्दरस्य करुणाया उत्कर्षः पूर्वम् एव कथितः। अनेन करुणोत्कर्षवशेन एव असुरसहारविषये अपि श्रीश्रीगौरसुन्दरस्य एकम् अपूर्व वैशिष्टच दृश्यते।

श्रीश्रीश्यामसुन्दरः असुराणा प्राणापहरणरूप संहार कृतवान्, श्रीश्रीगौरसुन्दरः पुनः असुराणाम् असुरत्वविनाशरूप सहार चकार न तु प्राणविनाशरूपम्। श्रीश्रीश्यामसुन्दरेण कृत. असुराणां सहार अपि तान् प्रति करुणा; यतः निहत असुर भव-बन्धनात् मुच्यते। परम् असुर यावत् जीवति तावत्कालम् अस्या. करुणाया उपलब्धिम् अपि कर्तु न अर्हति, दूरे पुनः तस्या माधुर्यानुभवः। श्रीश्रीगौरसुन्दरकृते असुरसहारे (असुरत्वसहारे इत्यर्थः) तु हन्यमान. असुर. करुणायाः

करुणामाधुर्यस्य च अनुभवम् आस्वादनं च कृत्वा एकम् अनिर्वचनीयं परमानन्द लभते, रसस्वरूपस्य रसप्रस्रवणस्य श्रीश्रीगौरसुन्दरस्य असुरसहारलीलाम् अपि माधुर्यमयी करोति।

## (८) रसस्वरूपत्वं गतिदायकत्वं च

स्वयं भगवान् हतारिगतिदायकः। श्रीश्रीश्यामसुन्दरः श्रीश्रीगौरसुन्दरः इति उभयरूपेण एव स स्वहस्तनिहतानाम् असुराणा गति ददाति। परम् उभाभ्यां प्रदत्ता गतिः गतेः प्रसारश्च न एकविध ।

श्रीश्रीश्यामसुन्दर· स्वहस्तनिहतस्य असुरस्य सायुज्यमुक्ति ददाति सायुज्यमुक्तौ सेव्यसेवकभाव· अपि न स्फुरति, दूरे पुन श्रीकृष्णचरणसेवा-(पृ० १४७ ) सम्भूत. आनन्दलाभ । हतस्य असुरस्य भगवद्विषये प्रातिकूल्य तिष्ठति। असुरः भगवत्सेवालाभस्य भगवत्प्रेमलाभस्य वा सौभाग्यात् वञ्चितो भवति। श्रीश्रीश्यामसुन्दर· इद प्रातिकूल्य न दूरीकरोति। असुरविषये तस्य कारुण्यविकाश केवल मुक्तिदानपर्यन्त. ब्रह्मानन्दास्वाददानपर्यन्तश्च। असुरस्य सायुज्यमुक्तिरूपा गतिश्च केवल सिद्धलोके (सायुज्यमुक्तिप्राप्ताना जीवाना गम्ये धामनि) एव कृतसीमा वर्तते ।

श्रीश्रीगौरसुन्दरस्य असुरत्वविनाशरूपे असुरसहारे तु एकम् अपूर्व वैशिष्ट्य वर्तते। पूर्णतमविकाशमयस्य रसस्वरूपत्वस्य रसधाराया प्रबलप्लावनेन असुरस्य असुरत्व दूरात् दूरम् अपसरति तेन सह च तस्य भगवति प्रातिकूल्यम् अपि सम्यक्

विधौतं भवति। पुनश्च, रसस्वरूपत्वस्य अपूर्व-विकाश-वैचित्री-रूपा करुणा, तस्य प्रातिकूल्यस्य स्थाने भगवद्विषयकम् आनुकूल्यं प्रतिष्ठापयति, कृतार्थीकरोति च त ब्रह्मादिदुर्लभव्रजप्रेमप्रदानेन। इयं प्रेमप्राप्तिरूपा गतिः—प्राकृतब्रह्माण्डं, विरजा, सिद्धलोकं, परव्योम, द्वारका मथुरां च अतिक्रम्य शुद्धमाधुर्यमयधाम्नि व्रजलोके गत्वा स्थितिं लभते।

इत्थं—गतिदायकत्वस्य अपि एकः अद्भुतो वैशिष्ट्यमय-विकाश. श्रीश्रीगौरसुन्दरे दृश्यते। (पृ० १४८)

---

## प्रेमविलासविवर्त-मूर्त विग्रहः विप्रलम्भमूर्त विग्रहश्च गौरः

श्रीश्रीगौरसुन्दरस्य विग्रहे श्रीश्रीराधाकृष्णयो विग्रहद्वयं मिलित्वा एकत्वं प्राप, तयो मनोद्वयम् अपि मिलित्वा एकत्वं प्राप्तम् इति हेतोः श्रीश्रीगौरे एव श्रीश्रीराधाकृष्णयोः परमम् ऐक्यं—देहस्य अपि परमम् ऐक्यं मनसः अपि परमम् ऐक्यम्। एतस्मात् गौरस्वरूपं राधाकृष्णयोः परैक्यरूपम् इति वक्तुं शक्यते।

अन्यत्र अपि श्रीश्रीराधाकृष्णयोः परैक्यकथा श्रूयते। श्रीश्रीचैतन्यचरितामृते श्रीलरामानन्दरायस्य उक्तेः ज्ञायते—प्रेमविलासविवर्ते एव श्रीश्रीराधाकृष्णयोः विलासमहत्त्वस्य—अत एव प्रेमपरिपाकस्य अपि चरमतम वैशिष्ट्यम्। प्रेमविलास-विवर्तस्य दिग्दर्शनरूपेण रामानन्दराय स्वकृतम् एक गीतम् उल्लिखितवान्।

"पहिलहि राग नयनभङ्ग भेल ।
अनुदिन वाढल अवधि ना गेल ॥
ना सो रमण ना हाम रमणी ।
दुहुँ मन मनोभव पेषल जानि ॥" श्रीचै, च, २।८।१५२-५३ ॥

श्रील-कविकर्णपूरो ब्रवीति—अनेन गीतेन राधाकृष्णयोः प्रेम्ण परा काष्ठा परैक्यं च प्रतिपादितम् ।

"तत. स गीतं सरसालिपीतं विदग्धयोर्नागरयोः परस्य ।
प्रेम्णोऽतिकाष्ठाप्रतिपादनेन द्वयो. परैक्य प्रतिपाद्यवादीत् ॥"
श्रीश्रीचैतन्यचरितामृतमहाकाव्यम् १३।४५॥

परम् एतत् परैक्यं कस्मिन् कस्मिन् विषये? अस्य परैक्यस्य किंवा स्वरूपम् ?

' दुहुँ मन मनोभव पेषल जानि"

इति वाक्येन तयोः मनसोः परैक्यम् एव सूचितम्, एवं

"ना सो रमण ना हाम रमणी"

इति वाक्येन तयो. देहविषये भेदज्ञानहीनता एव सूचिता । कविकर्णपूरः अपि तदीये चैतन्यचन्द्रोदयनाटके प्रेमविलास--विवर्तम् अधिकृत्य श्रीराधोक्तौ ईदृशम् एव अभिप्रायं प्रकटीकृतवान् ।

"सखि न स रमणो नाहं रमणीति भिदावयोरास्ते ।
प्रेमरसेनोभयमन इव मदनो निष्पिपेष वलात् ॥" ७।१४॥

तथा—

"अहं कान्ता कान्तस्त्वमिति न तदानीं मतिरभू-
न्मनोवृत्तिर्लुप्ता त्वमहमिति नौ धीरपि हता ॥७।१५॥"

इति च। भेदबुद्धिहीनतया उभयोः देहैक्यं सूचितम् इति मन्यते चेत् तत् ऐक्य परैक्यं वा भावगतं न तु वस्तुगतम् इति मन्तव्यं तदानीम् अपि तयोः देहद्वयस्य पृथगस्तित्वसत्त्वात्, केवल पृथक् अस्तित्वज्ञानं न आसीत्। तथा मनसः परैक्यम् अपि प्रेमप्रभावेन मनोभावस्य परैक्यम् ; एतत् अपि वस्तुगतं परैक्यम् इति वक्तुं न शक्यते। यतः देहयोः वस्तुतः पृथक् अस्तित्वसत्त्वेन मनसोः अपि वस्तुतः पृथक् अस्तित्वस्य आवश्यकत्वम्। अतः प्रेमविलासविवर्तस्य परैक्यं भावगत-परैक्यम्, न तु वस्तुगत-परैक्यम्।

"रसराज महाभाव दुइ एकरूपे"

गौरे तु देहस्य मनसश्च वस्तुगत परैक्य वर्तते। प्रेम-विलासविवर्ते यत् केवल भावगतरूपेण अमूर्तरूपेण वा विरा-जित, गौरस्वरूपे पुनः तत् एव वस्तुगतरूपेण मूर्तरूपेण वा विराजते। अतः श्रीश्रीगौरसुन्दर. प्रेमविलासविवर्तस्य मूर्त-विग्रह इति वक्तव्यम्।

श्रील-कृष्णदासकविराजगोस्वामी तदीये श्रीश्रीचैतन्यचरिता-मृते श्रीश्रीगौरसुन्दरस्य दिव्योन्मादजनितानि बहूनि प्रलाप-वाक्यानि उद्धृतवान्। श्रीकृष्णविरहात् दिव्योन्मादो जायते ; दिव्योन्मादे प्रलापादयः स्फुरन्ति। विरह एव विप्रलम्भ इति कथ्यते। यदा श्रीकृष्ण. मथुरायाम् आसीत् तदा श्रीकृष्णविरह-क्लिष्टा श्रीराधा दिव्योन्मादग्रस्ता सती प्रलापान् उक्तवती। तस्या. तात्कालिकभावावेशेन श्रीमन्महाप्रभु अपि तदा प्रला-पान् उद्गीर्णवान्। एतेन केचन मन्यन्ते श्रीमन्महाप्रभुः

विप्रलम्भस्य मर्तविग्रहः इति । पर एतत् न समीचीनं मन्ये ।
अस्य अय हेतु ।

श्रीराधाया मादनाख्यमहाभावस्य पूर्ववर्ती प्रेमस्तरः मोदन इत्युच्यते । अयं मोदन एव विप्रलम्भदशाया (विरहे) मोहननाम्ना अभिधीयते । मोहनात् एव दिव्योन्माद तज्जनिता. प्रलापादयश्च भवन्ति । अतो दिव्योन्मादजनिताः प्रलापादय. मोहनस्य मोदनस्य वा अवस्थाविशेषस्य प्रभाव । मोदनस्य, मोदनावस्थाविशेषरूपस्य मोहनस्य वा स्फुरणेन मादनस्य स्फुरण न भवति । मादनस्य स्फुरणे असञ्जाते, गौरस्वरूपस्य स्फुरणम् (अभिव्यवित वा) अभूत् इति न वक्तुं शक्यते । कथम् इति चेत्, राधाकृष्णमिलितस्वरूपस्य गौरसुन्दरस्य विशेषत्व—श्रीराधाया मादनाख्यमहाभाव , मादनस्य स्फुरणेन एव गौरस्वरूपस्य अभिव्यक्ति । सर्वभावोद्गमोल्लासी मादन "स्वयप्रेमरूप." । तन्मध्ये मोदन अपि अस्ति । तथापि मोदनाविर्भावो मादनाविर्भाव इति वक्तु न शक्यते । यथा स्वयभगवत श्रीकृष्णस्य अशभूताना श्रीकृष्णस्य एव अन्तर्गताना रामनृसिहादीनाम् आविर्भावः श्रीकृष्णाविर्भाव इति वक्तु न शक्य न उच्यते—च, तथा । दिव्योन्मादजनिता प्रलापादय मोदनावस्थाविशेषस्य मोहनस्य परिचायका अपि गौरवैशिष्ट्यस्य मादनस्य परिचायका भवितु न अर्हन्ति । अत. गौरस्वरूपस्य अपि परिचायका न भवितुम् अर्हन्ति । श्रीकृष्णविरहकातराया श्रीराधाया भावावेशेन दिव्योन्मादग्रस्त प्रलापमुखर श्रीश्रीगौरसुन्दर. विप्रलम्भमूर्तविग्रह इति काम वक्तु शक्यम्, पर तेन तस्य स्वरूपस्य सम्यक्

परिचयो न लभ्यः ; यतः तत्र मादनस्य विकाशो नास्ति । प्रेमविलासविवर्तस्य मूर्तो विग्रहः इत्युक्त्या एव गौरस्य स्वरूपस्य सम्यक् परिचयो लभ्यः । यतः तेन गौरस्य असाधारणवैशिष्ट्यस्य मादनस्य अस्तित्वम् अभिव्यक्तिश्च ख्यापिते भवतः (विशेषः श्रीश्रीचैतन्यचरितामृत ३।१९।१०४ पद्यस्य गौरकृपातरङ्गिणीटीकायां द्रष्टव्यः) ।

---

## व्रजलीला नवद्वीपलीला च

श्रीश्रीगौरसुन्दरः यथा श्रीकृष्णस्य एव आविर्भावविशेषः एवं नवद्वीपः अपि व्रजस्य एव आविर्भावविशेषः ; स ब्रह्माण्डे केवलं प्रकटितः ।

श्रीश्रीश्यामसुन्दरे श्रीश्रीगौरसुन्दरे च यथा स्वरूपगतं किम् अपि पार्थक्य नास्ति एवं व्रजलीलायां नवद्वीपलीलायां च स्वरूपगतं पार्थक्यं किञ्चित् नास्ति । रसिकशेखर परब्रह्म व्रजधाम्नि यत् लीलास्रोतः प्रावाहयत् तत् एव प्रबलं वेग धृत्वा इव नवद्वीपे समुपस्थितम्—नूनम् अनादिकाले एव । नवद्वीपलीला व्रजलीला च रसिकशेखरस्य एकस्य एव लीलाप्रवाहस्य अंशद्वयमात्रम् । मन्ये रसिकशेखरस्य असमोर्ध्व-माधुर्यमय-लीला-कदम्बस्य पूर्वांशो व्रजलीला उत्तरांशः पुनर्नवद्वीपलीला इति । तैस्तैः हेतुभिः एतत् अपि मनसि आयाति यत् व्रजलीलायाः

परिणतावस्था एव नवद्वीपलीला। यत् उद्दिश्य व्रजेन्द्रनन्दनः तस्य लीला प्रकटयति, तदुद्देश्यसिद्धेः आरम्भो व्रजे, पूर्णता तु नवद्वीपे। तस्य लीलाप्रकटनस्य मुख्यम् उद्देश्यं—भक्तस्य प्रेमरसनिर्यासास्वादनं, गौणम् उद्देश्य च—रागमार्गस्य भक्ति-प्रचारः।

प्रेमरस-निर्यास करिते आस्वादन।
रागमार्ग भक्ति लोके करिते प्रचारण॥
रसिकशेखर कृष्ण परमकरुण।
एइ दुइ हेतु हैते इच्छार उद्‌गम॥

श्रीचै, च, १।४।१४-१५ (पृ० १४९)

अनयो॰ द्वयो॰ उद्देश्ययो. मध्ये भक्तप्रेमरस-निर्यासस्य आस्वादन—रसिकशेखरस्य स्वरूपानुवन्धिनी नित्यलीला। इय लीला अप्रकटधाम्नि प्रकटधाम्नि च वर्तते, प्रकटस्य विशेषत्व पुन एतत् यत्, यस्या॰ प्रेमरसवैचित्र्या आस्वादनम् अप्रकटे न सम्भवति, प्रकटे ताम् आस्वादयति—प्रकटे जन्म-लीलादिसत्त्वेन तत्सम्भवात्। रागमार्गभक्तिप्रचारश्च—जीव-विषयिणी लीला, अय प्रकटलीलायाम् एव भवति।

प्रकटलीलायाम् अप्रकटलीलाया च श्रीकृष्ण तस्य स्वरूपानुबन्धिनी रसास्वादिका लीला करोति, करोति च अशेपविशेपेण परिकरभक्ताना प्रेमरसनिर्यासस्य आस्वादनम् अपि। तथापि तस्य रसास्वादनवासना पूर्णता न लभते। यदि वा भक्तप्रेमरसनिर्यासस्य आस्वादनवासना प्रकटाप्रकट-लीलयो समवायेन पूर्णता लभते, तथापि स्वीयम् असमोर्ध्व-माधुर्यरसम् आस्वादयितु न शक्नोति—न प्रकटे नवा अप्रकटे।

अस्य कारणम् एतत् । श्रीकृष्णमाधुर्यस्य पूर्णतमरूपेण आस्वादने अद्वितीयः उपायः—श्रीराधाया मादनाख्यमहाभावः । व्रज-लीलायां श्रीकृष्णः अस्य मादनस्य विषयमात्र न तु आश्रयः, अस्य प्रेम्णः आश्रयेण भवितुम् अशक्नुवता कृष्णमाधुर्यस्य पूर्णतमम् आस्वादनं न शक्यम् । राधाकृष्णमिलित-गौररूपे अस्य मादनस्य सत्त्वात् अस्मिन् एव रूपे श्रीकृष्णमाधुर्यस्य आस्वादन सम्भवति । रसिकशेखर. परब्रह्म श्रीश्रीगौरसुन्दर-कृष्णरूपेण एव स्वीयं माधुर्यम् आस्वादयति—प्रकट-नवद्वीपे अप्रकट-नवद्वीपे च । एतेन अपि दृश्यते—रसास्वादनस्य यः अंशः व्रजलीलायाम् अपूर्ण. तिष्ठति, नवद्वीपलीलायाम् एव स पूर्णतां लभते । (पृ० १५०)

अथ करुणावशेन रागमार्गस्य भक्तिप्रचारः। कुरुक्षेत्रे अर्जुनम् उद्दिश्य श्रीकृष्णः "मन्मना भव मद्भक्तो मद्याजी मा नमस्कुरु" इत्यादिवाक्येन रागमार्गभक्तिम् उपदिष्टवान् ; तद् अपि केवल दिगदर्शनरूपेण । नवद्वीपलीलायां श्रीश्रीगौर-रूपेण श्रीपादसनातनगोस्वामिनम् उपलक्ष्य अस्य अतिविस्तृत विवरण दत्तवान् । अपरत. च द्वापरलीलायाम् अर्जुनाय उपदेशमात्र ददौ भजनस्य कम् अपि आदर्श तु न स्थापित-वान् । परं कलौ गौररूपस्य लीलाया तेन सङ्कल्प एव कृत—

"आपनि आचरि भक्ति शिखाइमु सभाय ।
आपनि ना कैले धर्म शिखान ना याय ॥"

श्रीचै, च, १।३।१८-१९॥

नवद्वीपलीलायां भक्तभावम् अङ्गीकृत्य स स्वयम् अपि भजनस्य

आदर्शस्थापनम् अकरोत् पार्षदवर्गद्वारा अपि अकारयत् । तेन जीवः भजनस्य कञ्चन अत्युज्ज्वलम् आदर्श प्राप ।

तृतीयत, उपदेशानुरूपे भजने जीवानाम् आकर्षणार्थ व्रजलीलाया श्रीकृष्ण तथाविधा. तास्ता लीला. प्रकटितवान् याः श्रुत्वा जना भजनार्थं प्रलुब्धा भवन्ति ।

अनुग्रहाय भक्ताना मानुषं देहमाश्रित ।
भजते तादृशी. क्रीडा या. श्रुत्वा तत्परो भवेत् ।।

श्रीभा, १०।३३।३६

व्रजलीलाया परिकरै. सह लीलाम् अनुष्ठाय तेन—तस्य सेवाया कियान् अपूर्व अनिर्वचनीयः च आनन्दः अस्ति, तेनैव सह लीलारससमुद्रे निमग्नोन्मग्नेन सता सन्तरणे यावान् अपरिसीमानन्दस्य उपभोग. कर्तुं शक्य.—तत्कथायाः श्रावणव्यवस्था कृता, न तु सा लीला तेन जीवेभ्यः प्रदर्शिता । श्रीश्रीगौरसुन्दररूपेण नवद्वीपलीलाया स.—प्रेमानन्दस्य विविधा (पृ० १५१) वैचित्री प्रकटय्य ता लोकनयनगोचरीभूताम् अकरोत् ("श्रीश्रीगौरकरुणार वैशिष्ट्य" नाम्नि ग्रन्थे 'प्रेमेर स्वरूपप्रकाशे करुणार वैशिष्ट्य" प्रबन्धे अत्र विषये विस्तृता आलोचना वर्तते) । व्रजलीलाया यत् केवलम् अश्रावयत्, नवद्वीपलीलाया तद् अदर्शयत् ।

इत्थ दृष्टम्, तस्य रागमार्गभक्तिप्रचारस्य अपि आरम्भो ब्रजे, पूर्णता च नवद्वीपे इति ।

रसिकशेखरस्य प्रेमवश्यताया विकाशे अपि व्रजलीलापेक्षया नवद्वीपलीलाया उत्कर्ष, । व्रजे रासलीलायां "न पारयेऽहं निरवद्यसंयुजा" इत्यादि (श्रीभा, १०।३२।२२)

वाक्ये केवलं मुखत एव व्रजसुन्दरीणा प्रेमसमीपे श्रीकृष्णः स्वम् अधमर्णं स्वीकृतवान् ; परं तस्य ऋणित्वस्य कुत्र पर्यवसानम् इति तु नवद्वीपलीलायाम् एव दर्शितवान्। नवद्वीपलीलायां सः श्रीराधाया भावकान्तिम् अङ्गीकृत्य क्रियया अपि स्वम् ऋणित्वं ख्यापितवान् ऋणित्वस्य पर्यवसानसीमानम् अपि दर्शितवान् ।

श्रीश्रीराधाकृष्णयो. मिलन-रहस्यविचारे अपि नवद्वीपलीला व्रजलीलाया. परिणता अवस्था इति मनसि कर्तुं शक्यम् । नितान्तघनिष्ठतममिलने अपि व्रजे उभयो अङ्गस्य स्वतन्त्रता-बोधो न विलुप्तो भवति। परं नवद्वीपे उभौ मिलित्वा एक. सन् वर्तते ।

'रसराज महाभाव दुइ एकरूप" ।

लीलापरिकराणा स्वरूपद्वारा लीलास्वरूप ज्ञायते । श्रीकृष्णस्य व्रजलीलाया परिकरवर्गा अपि नवद्वीपलीलोप-योगिना देहेन नवद्वीपे विराजन्ते। एतेन अपि व्रजलीला-नवद्वीप-लीलयो. स्वरूपत अभिन्नता सूचिता भवति (पृ० १५२) ।

एतैः हेतुभि. एव कथित—नवद्वीपलीला-व्रजलीलयोः स्वरूपत. किम् अपि पार्थक्य नास्ति इति । एते एकस्य एव लीलाप्रवाहस्य द्वौ भिन्नौ अशौ ; उभयलीलासमवायेन एव रसिकशेखरस्य लीलायाः पूर्णता ।

नवद्वीपलीला व्रजलीला च एकस्मिन् सूत्रे ग्रथिते ; अतः एकस्यां परित्यक्तायाम् एव समग्रलीलाया. सौन्दर्यस्य उपभोग्य-त्वस्य च हानि भवति। नवद्वीपलीलाया श्रीश्रीगौरसुन्दरः

राधाभावेन आविष्टः सन् व्रजलीलाम् एव आस्वादयति ; अतो वृजलीला एव नवद्वीपलीलायाः उपजीव्या पोषिका वा । अतएव व्रजलीलाया त्यक्ताया नवद्वीपलीला बाहुल्येन नीरसा भवेत् । अथ च नवद्वीपलीलाया त्यक्तायाम् अपि व्रजलीलाया माधुर्यवैचित्री आस्वादनस्य उन्मादना च क्षुण्णा इव भवेत् । काम मधु स्वतः एव आस्वाद्यम् पर घनीभूतामृतमये भाण्डे सस्थाप्य तद् यदि आस्वाद्यते, तर्हि तस्य माधुर्य सर्वातिशायितया अवश्यम् एव वर्धते । अथ यदि तेन सह कर्पूरो मिलितो भवति, तदा आस्वादनस्य उन्मादना अपि विशेषेण वर्धते । व्रजलीला मधु, नवद्वीपलीला च कर्पूरमिश्रितममृतम् श्रीमन्महाप्रभुः साक्षात् माधुर्यमूर्तिः , स एव नवद्वीपलीलाया व्रजरसस्य परिवेशकः । रसस्य गृहस्थितिमात्रेण एव आस्वादनं न लभ्यते , परिवेशकस्य परिवेशननैपुण्ये एव आस्वादनस्य विचित्रता सुस्थिता वर्तते । रसिकेन्द्रचूडामणौ श्रीमन्महाप्रभौ यथा परिवेशननैपुण्यम् अन्यत्र तथा दुर्लभम् । अत एव नवद्वीपलीलाया परित्यक्ताया व्रजलीलाया माधुर्यवैचित्री आस्वादनस्य उन्मादना च क्षुण्णे इव सम्भाव्येते । व्रजलीलारूपम् अमूल्य रत्न नवद्वीपलीलारससमुद्रे एव लभ्यम् ।

कृष्णलीलामृत-सार, तार शत शत धार,
दशदिगे वहे याहा हैते ।
से गौराङ्ग-लीला हय, सरोवर अक्षय,
मनोहंस चराह ताहाते ॥

श्रीचै, च, २।२५।२२३

श्रील-नरोत्तमदास-ठाकुर-महोदय उक्तवान्—

गौरप्रेम रसार्णवे, से तरङ्गे ये वा डुवे,
से राधामाधव अन्तरङ्ग। इति।

एतैः कारणसमहैः श्रीश्रीगौरसुन्दरः श्रीश्रीश्यामसुन्दरश्च—श्रीश्रीनवद्वीपलीला श्रीश्रीव्रजलीला च--उभयम् एव तुल्यभावेन भजनीयम्। उभयलीलायाः सेवा एव साधकेन तुल्यं काम्या। एतत् एव श्रील-नरोत्तमदासठाकुर-महोदयः उक्तवान्—"एथा गौरचन्द्र पाव, सेथा राधाकृष्ण"। उभयलीलायाः आस्वादनेन उभयलीलायाः सेवया च रसिकशेखरस्य रसमय्या लीलायाः पूर्णतमम् आस्वादनं पूर्णतमा सेवा च।

---

## गौरस्य उपास्यत्वम्

"कृष्णवर्णं त्विषाकृष्ण" इत्यादिश्लोकेन श्रीश्रीगौरसुन्दर एव वर्तमानकलेः उपास्यतया घोषितः।—

करुणा एव भजनीय गुणसमूहेषु सर्वश्रेष्ठो गुण.। गौरसुन्दरस्य करणायाः ईदृश एव विकाशः यत्, भजन-साधन-निरपेक्ष अपि स निर्विचारम् आपामरसाधारणं सर्वेभ्य एव ब्रह्मादिभिः अपि दुर्लभ व्रजप्रेम (पृ० १५४) दत्तवान्। अन्यस्यां लीलाया करुणाया एतादृशः अपूर्वो विकाश. न दृश्यते।

ये खलु श्रीमन्महाप्रभोः प्रकटकाले ब्रह्माण्डे समागताः ते सर्वे एव गौरस्य करुणया (संसारात्) उद्धारं लेभिरे। उत्तर-

कालवर्तिना जीवाना कृते अपि प्रभो अनन्ता करुणा आसीत् । तेषाम् एव कृते स भजनादर्श स्थापयामास, भजनप्रणाली च प्रचारयामास । काम स तस्य लीला सहृतवान्, तथापि, ये तेन एव प्रदर्शितम् आदर्शम् अनुसृत्य तत्प्रचारितेन एव पथा भजन करिष्यन्ति अखण्डप्रेमभाण्डार हस्तेकृत्य तेषा कृते स इदानीम् अपि प्रतीक्षते ।

भक्तिरसामृतसिन्धौ उक्तं—सायुज्यकामस्य ज्ञानमार्गीय-साधनेन या मुक्ति सा अपि वर सुलभा, कर्ममार्गानुसरणेन भुक्तिकामस्य यत् ऐहिकसुख पारलौकिक स्वर्गादिसुख च, तत् अपि वर सुलभम्, हरिभक्ति तु सहस्रेण साधनै अपि दुर्लभा इति । तथा च—

> ज्ञानत सुलभा मुक्तिर्भुक्तिर्यज्ञादिपुण्यत ।
> सेय साधनसाहस्रैर्हरिभक्ति सुदुर्लभा ।। इति ।
>
> भ, र, सि, १।१।२३

अस्य दुर्लभत्वस्य द्विविध खलु अर्थ—कथम् अपि प्राप्तु न शक्यते इति एक ; द्वितीयश्च प्राप्तु शक्यते पर न अनायासेन—यावत् चित्ते इहकालस्य परकालस्य वा सुख-सम्पद्वासना मुक्तिवासना वा तिष्ठति तावत् प्राप्तु न शक्यते इति । अनासङ्गभजनेन (अर्थात् साक्षात् प्रवृत्ति-विहीनभावेन भजनेन) कथम् अपि हरिभक्ति न लभ्येत । सासङ्गभजनेन च ( साक्षाद् भजनप्रवृत्तिमयभजनेन, श्रीकृष्णसमीपे उपस्थित (पृ० १५५) सन् तस्य एव प्रीतिम् उद्दिश्य भजनाङ्गस्य अनुष्ठान करोमि—इति मनोभावेन)

भजनं कुर्वतः यदा चित्तात् भुक्तिमुक्तिवासना दूरीभूता श्रीकृष्णचरणसेवावासना च उत्कण्ठामयी भवेत् तदा एव हरिभक्तिः (प्रेम-भक्तिः) प्राप्तुं शक्यते । तथा च—

साधनौघैरनासङ्गैरलभ्या सुचिरादपि ।
हरिणा चाश्वदेयेति द्विधा स्यात् सा सुदुर्लभा ।।

भ, र, सि, १।१।२२।। इति ।

श्रीमन्महाप्रभुः एतादृशी सुदुर्लभा प्रेमभक्ति निर्विचार सर्वेभ्यो ददौ ।

हेन प्रेम श्रीचैतन्य दिल यथा तथा ।
जगाइ माधाइ पर्यन्त आनेर का कथा ।।

श्रीचै, च, १।८।१७

एवम् अन्तर्धानात् अनन्तरम् अपि प्रभुः एतादृशी सुदुर्लभां प्रेमभक्ति दातुम् उत्कण्ठित इव वर्तते (भजनस्य आदर्श-स्थापनेन भजनप्रणालीप्रचारेण चैव प्रेमभक्तिदानार्थं तस्य व्याकुलता सूचिता) ।

यत्र करुणाया ईदृशः अपूर्वो विकाश. तस्य भजनीय-गुणनिधित्वे सशयेन न स्थेयम् ।

(महाप्रभोः करुणाया अपूर्वं वैशिष्ट्यं मूललेखकस्य "श्रीश्रीगौरकरुणार वैशिष्ट्य" नाम्नि ग्रन्थे द्रष्टव्यम्) ।

नमो महावदान्याय कृष्णप्रेमप्रदाय ते ।
कृष्णाय कृष्णचैतन्यनाम्ने गौरत्विषे नमः ।। (पृ० १५६)

———

# सम्भवामि युगे युगे

( १ )

अर्जुनस्य समीपे श्रीकृष्ण उक्तवान्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥—

श्रीगीता ४।७-८

एतत्स्थलीय "यदा यदा हि" वाक्यात् केचन नूनं मन्येरन् यत् साधुप्रभृतीनां परित्राणाद्यर्थं भगवान् यदा तदा एव ब्रह्माण्डे अवतीर्णो भवति, तदवतरणस्य समयसम्बन्धे वार-संख्यासम्बन्धे च कश्चित् अपि नियमो नास्ति इति। श्रीपाद-रामानुज. स्पष्टभावेन एव एतत् लिखितवान्—"यदा यदा हीति न कालनियम. अस्मत्सम्भवस्य" इति। "युगे युगे" शब्द यम् अधिकृत्य अपि तेन उक्तं—"युगे युगे सम्भवामि, कृतत्रेतायुगेषु विशेषनियमोऽपि नास्ति इत्यर्थ." इति। अत्र विषये शास्त्र किं वक्ति इति इदानीं द्रष्टव्यम्।

भगवान् त्रिधा ब्रह्माण्डे अवतीर्णो भवति—स्वयरूपेण, लीलावताररूपेण, युगावताररूपेण च (पृ० १५७)।

स्वयरूपस्य अवतरणविषये कविराजगोस्वामी लिखितवान्—

ब्रह्मार एकदिने तिंहो एक बार ।
अवतीर्ण हय्या करेन प्रकट विहार ॥ श्री चै, च, १।३।४

ब्रह्मण: एकेन दिनेन मनुष्यमानेन ४२९४०८,००००
वत्सरा भवन्ति, विष्णुपुराणमते तु ४३२,००००,०००
वत्सरा:। एषु वर्षेषु स्वय भगवान् सकृत् एव अवतीर्णो
भवति, नासकृत्। श्रीमद्भागवतस्य प्रथम-स्कन्धीय-
तृतीयाध्याये अपि स्वयंभगवत श्रीकृष्णस्य सकृत् एव अवतरणम्
उल्लिखितम्। अत स्वयभगवत. अवतरणकालस्य कश्चित्
नियमो नास्ति इति शास्त्रात् न ज्ञायते। ब्रह्मण. एकस्मिन्
दिने सहस्र चतुर्युग तिष्ठति, तत्र क्वचन एकस्मिन् द्वापरे स
अवतीर्णो भवति—एष एव नियमो दृश्यते।

लीलावताराणाम् अवतरणविवरणम् अपि श्रीमद्भागवते
प्रदत्तम् (१म स्कन्ध ३य अध्याय)। तत्र कस्य अपि लीला-
वतारस्य एकाधिका अवतरणकथा न उक्ता, सकृत् अवतरणम्
एव उल्लिखितम्। अत: लीलावतारा यदा-तदा एव
अवतीर्णा भवन्ति—शास्त्रात् एतत् अपि न ज्ञायते। लीला-
वतार कलिकाले न अवतरति—वरम् ईदृश कश्चन नियमो
दृश्यते।

कलियुगे लीलावतार ना करे भगवान्।
अतएव त्रियुग करि कहे तार नाम॥

श्रीचै, च, २।६।९७

अत. परं युगावतार.। चतुर्युगार्थं चत्वारो युगावतारा.
सन्ति। सत्ये शुक्ल, त्रेताया रक्त., द्वापरे श्याम (शुक-
पत्राभ) कलौ च (पृ० १५८) कृष्ण (अय न स्वय भगवान्
कृष्ण. अपि तु तस्य अंश)। एकयुगीयो युगावतार: अन्य-

स्मिन् क्वचन युगे न अवतरति। यो यस्य युगस्य युगावतारः स तत्र एव युगे केवलम् अवतरति। अत एव प्रतियुग युगावतारो निर्दिष्टो वर्तते। कश्चन युगावतार तस्य स्वीये युगे असकृत् अवतीर्णो भवति--इत्यत्र अपि शास्त्रे किम् अपि प्रमाण न लभ्यते। एव च, युगावताराणाम् अवतरण-विषये अपि समयस्य कश्चित् नियमो नास्ति—एतत् अपि न सगच्छते।

पर कस्मिन् काले युगावतार अवतीर्णो न भवति, एतस्य कश्चित् नियमो दृश्यते। यत्र युगे स्वयभगवान् अवतीर्णो भवति, तस्य युगस्य युगावतार पुन पृथक् न अवतरति, स्वयभगवति एव स तिष्ठति, तत्र एव च स्थित्वा स युगावतार स्वयभगवत अङ्गप्रत्यङ्गादिद्वारा स्व कार्यं निर्वाहयति। तत्र युगे युगावतारस्य अवतरणसमकालम् एव स्वयभगवान् अपि अवतीर्णो भवति।

किन्तु कृष्णेर येइ हय अवतार-काल।
भारहरण काल ताते हइल मिशाल॥

श्रीचै, च, १।४।८

पृथिव्या भारहरण युगावताररूपेण पालनकर्तुः (क्षीरोदशायिनो गुणावतारस्य) विष्णो एव कार्यम्।

स्वय भगवानेर कर्म नहे भारहरण।
स्थितिकर्ता विष्णु करे जगत पालन॥

श्रीचै, च, १।४।७

भारहरण स्वयभगवतः कार्यं चेत् प्रतियुगं तेन अव-तरितव्यम्, युगावतारस्य किम् अपि प्रयोजन न स्यात्।

अनेन रूपेण युगावताराणाम् अवतरणनियम. अपि शास्त्रे लभ्यते। ते अपि यदा-तदा न अवतरन्ति, एकस्मिन् युगे असकृत् अपि न अवतरन्ति। यत्र युगे स्वयभगवतः अन्त-र्भूतः सन् अवतरति तत्र युगे अपि युगावतारः पृथक् न अवतरति।

वाढं—यत्र युगे स्वयभगवतः अन्य. कश्चन लीला-वतारः अवतीर्णो भवति, तस्य युगस्य युगावतारः अपि यथाकालं पृथक् अवतीर्णो भवति। स युगावतारः तस्य लीलावतारस्य अन्तर्भूतो न तिष्ठति। केवल स्वयभगवान् एव "निखिलावतारसमष्टिरूपः" इति कृत्वा तन्मध्ये एव युगावतार. तिष्ठति, अन्यत् किमपि भगवत्स्वरूपं न "निखिला-वतारसमष्टिरूपम्" ।

यदि भगवान् यदा-तदा एव अवातरिष्यत् तथा सति केवल "यदा यदा हि" इति उक्त्वा एव श्रीकृष्णो व्यरमिष्यत्, न पुन "सम्भवामि युगे युगे" इति अकथयिष्यत्। "यदा यदा हि" वाक्यस्य तात्पर्यम् एव "सम्भवामि युगे युगे" वाक्येन प्रकाशितम्। तथा, स यदा तदा एव अवतीर्णो न भवति, एतत् अपि अनेन वाक्येन विवृतम्। स "युगे युगे" अवतीर्णो भवति। "सम्भवामि युगे युगे" वाक्येन "यदा यदा हि" वाक्यस्य व्यापकतमः अर्थ. सङ्कुचितः कृतः। एतदर्थम् एव श्रीपादशङ्करः, श्रीपादहनुमान् श्रीपादमधुसूदनादयश्च भाष्य-कारा लिखितवन्तः—"युगे युगे प्रतियुगम्" इति। श्रीपादविश्व-नाथचक्रवर्ती लिखितवान्—"युगे युगे प्रतियुगं प्रतिकल्पं वा इति। "प्रतिकल्पम्" इति शब्देन स्वयंभगवतः अवतरण-

कथा सूचिता, स एकस्मिन् कल्पे (ब्रह्मण एकस्मिन् दिने) सकृत् अवतीर्णो भवति। श्रीपादश्रीधरस्वामी श्रीपाद-बल-देवविद्याभूषण च व्यलिखता "युगे युगे तत्तदवसरे, तत्तत्-समये" इति। सर्वेषाम् एषा भाष्यटीकादिकाराणा लिखितार्थस्य (पृ० १६०) तात्पर्यम् एतत् यत्, प्रतियुग भगवान् युगाव-तारादिरूपेण अवतीर्णो भवति, यदा-तदा न अवतरतीति।

यद् अस्तु, उल्लिखिताभ्य आलोचनाभ्य ज्ञातम्—भगवान् यदा-तदा एव न अवतरति। तदवतरणस्य समयादिविषये तस्य स्वाधीनो नियम अस्ति। प्रतियुग युगावताररूपेण स सकृत् एव अवतरति, स्वय भगवद्रूपेण एकस्मिन् कल्पे सकृत् अवतीर्णो भवति, एकलीलावताररूपेण च एकाधिकम् अवतार न करोति। कलौ लीलावताररूपेण अपि न अवतरति। यत्र युगे स्वय भगवान् अवतरति तस्य युगावतार पुन पृथक् न अवतरति च—इति।

केचित् एव ब्रूयु—ब्रह्मण एकस्मिन् दिने स्वयभगवत द्वि अवतरण तु दृश्यते एव, एक द्वापरे श्रीकृष्णरूपेण, भूय, तस्य द्वापरस्य अव्यवहितोत्तरवर्तिनि कलौ स श्रीश्रीगौर-रूपेण अवतरति इति।

अस्य उत्तरम्। यत् उद्दिश्य स्वयभगवान् ब्रह्माण्डे अवतरति, तस्य उद्देश्यस्य सिद्धे सम्यक् पूर्णतापर्यन्तम् एव तस्य लीलाप्रवाह प्रचलति, अन्यथा तस्य अवतरणम् एव सम्पूर्णा सार्थकता न लभते। स्वयंभगवान् रागमार्गस्य भक्तिप्रवर्तनार्थम् अवतरति। पूर्वम् एव कथितम्—अस्या उद्देश्यसिद्धे आरम्भ द्वापरस्य व्रजलीलाया पूर्णता च कलौ

नवद्वीपलीलायाम् इति । द्वापरलीलायाम् एतदुद्देश्यसिद्धेः यत् किञ्चित् अपूर्णं तिष्ठति, तत् द्वापरलीलाया पूर्णतां न अर्हति—श्रीकृष्णरूपेण तेन तत् पूरयितुं न शक्यम् इति अपि पूर्वम् एव कथितम् । भक्तभावमयी लीला विना तत् न पूर्णता लभेत । श्रीकृष्णस्य द्वापरलीला न भक्तभावमयी । तस्य गौररूपस्य (पृ० १६१) नवद्वीपलीला एव भक्तभावमयी । अतएव गौररूपीय-लीलायाम् एव उद्देश्यसिद्धेः पूर्णता-सम्भव ।

एकस्याम् एव लीलायां भक्तभावो भगवद्भावश्च न सम्भवत । एवं सति लीलाया. स्वरूपगतभावस्य च नित्यत्वं व्याहन्यते । अत तेन द्विरूपेण अवतरणीयम् अभूत्, द्वयोः भावयो. लीला अपि प्रकटीकरणीया अभूत् । अन्यथा उद्देश्य-सिद्धे· पूर्णता न स्यात् । रूपद्वयेन अवतरणसमयस्य पार्थक्यम् अपि न अधिकम् । कृष्णरूपेण स द्वापरशेषे अवातरत्।

अष्टाविंश चतुर्युगे—द्वापरेर शेषे ।
व्रजेर सहिते हय कृष्णेर प्रकाशे ॥ श्रीचै, च, १।३।८

गौररूपेण तु तेन अवतीर्ण—तस्य एव चतुर्युगस्य अन्त-र्गताया कलेः प्रथमसन्ध्यायाम्

एत भावि कलिकाले प्रथम सन्ध्याय ।
अवतीर्ण हैला कृष्ण आपनि नदीयाय ॥
श्रीचै, च, १।३।२२

द्वापरशेषे श्रीकृष्णरूपेण कलिप्रथमसन्ध्याया गौररूपेण च स्वयं भगवान् रागधर्मप्रवर्तनकारिणीम् एकाम् एव लीला प्रकटी-

चकार। अत. बाह्यदृष्ट्या तस्य द्विरवतरणे दृश्यमाने अपि लीलाप्रवाहस्य लीलाप्रकटनोद्देश्यस्य च अभिन्नता न अपगता। तेन द्वापरलीला कलिलीला च परस्पर भिन्ने इति न वक्तु शक्यते। एक एव लीलाप्रवाह, अन्तरा स्वल्प विराममात्रम्। द्वापरे, कियत्काल व्रजलीला कृत्वा श्रीकृष्णो मथुराया द्वारकाया च लीलाम् अकरोत् तदा प्रकटव्रजलीलाया विराम.। दन्तवक्रवधात् (पृ० १६२) परं पुन व्रजे आगमन कियत्काल लीलानुष्ठान च। मध्यवर्तिना विरामेण व्रजलीलाया स्वरूप न क्षुण्णम् अभवत्, न च विरामात् पूर्ववर्तिनी परवर्तिनी च लीला पृथक् इति उच्यते। एवम् एव द्वापरलीला-नवद्वीपलीलयो मध्ये जाते अपि कैयत्कालिके विरामे लीलाया उद्देश्य न व्याहतम् इति एते लीले भिन्ने वक्तु न शक्ये। व्रजे क्वचित् "दिया-शिनो" "नापितान्यादि" स्वरूपप्रकटनेन अपि यथा लीलाया स्वरूपं न विहतं भिन्नता च न प्रकटिता एवम् एव श्रीकृष्ण-स्वरूप-गौरस्वरूपाभ्याम् आविर्भावेन अपि लीलाया भिन्नता न प्रतिपादनीया। यदा एका एव लीला एकम् एव च लीलाया उद्देश्य तदा कियद् विरामे अपि उभयधामगतलीलाया भगवत. अवतरणम् एकम् एव इति मन्तव्यम्। पृथक् अवतर-णोक्ति न समीचीना। वर नवद्वीपलीला वृजलीलाया परिशिष्टो भाग इति वक्तु युज्यते। परिशिष्टो मूलग्रन्थश्च अभिन्नौ एव।

नाटके एकाधिकानि दृश्यानि वर्तन्ते। द्वयो द्वयोः दश्ययो मध्ये अभिनयस्य विराम अपि वर्तते। एतावता

अपि तत् नाटकम् एकम् एव । नाटकस्य नायकश्च तत्र तत्र दृश्ये तत्र तत्र काले कदाचित् विभिन्न भावम् अधिकृत्य अपि अवतरति । तथापि "अमुत्र नाटके अमुको नायकरूपेण अवतीर्ण" इति सामग्रिकदृष्ट्या एकस्य एकम् एव अवतरणम् उच्यते । स्वयंभगवत. लीलानाटचे अवतरणम् अपि तथा । अस्य नाटकस्य दृश्यद्वय प्रतिभाति---एकस्मिन् वृजलीला, अन्यस्मिन् नवद्वीपलीला । सामग्रिकदृष्ट्या एकम् एव लीला-नाटचम् । नायक.---स्वय भगवान् । स द्वयो. दृश्ययोः भावद्वयम् आश्रित्य अवतरति । (पृ० १६३) सामग्रिक-दृष्ट्या तस्य अपि एकम् एव अवतरणम् । द्वयोः दृश्ययोः मध्ये व्यवधान---मनुष्यमानेन प्रायेण पञ्चसहस्रवत्सरा । परं ब्रह्मणो दिनमानेन अत्यल्पम् एतत् ।

यद् अस्तु, उल्लिखितेन आलोचनेन ज्ञातम्---भगवतो ब्रह्माण्डे अवतरणस्य कश्चन नियम अस्ति । स्वय भगवान् ब्रह्मण एकस्मिन् दिने सकृत् एव अवतरति इति । परं चैतन्यभागवतस्य एकया उक्त्या आपाततो मनसि आयाति यत् अस्य नियमस्य अपि व्यतिक्रमो वर्तते इति । वस्तुगत्या पुनः कोऽपि व्यतिक्रमो नास्ति इति श्रीचैतन्यभागवतस्य उक्तेः आलोचनया दर्शयिष्यते ।

---

## श्रीचैतन्यभागवतस्य उक्तिः

श्रीमन्महाप्रभु यदा सन्न्यासग्रहणस्य सङ्कल्प कृतवान्, तदा नित्यानन्दस्य समीपे सा सङ्कल्पकथा तेन विज्ञापिता। श्रीमन्नित्यानन्दस्य अभिप्रायानुसारेण प्रभुणा पार्षदानां समीपे अपि स्वसङ्कल्पकथा प्रकाशिता। तत् ज्ञात्वा सर्वे एव विषादसमुद्रे निमग्ना। तान् सान्त्वयितु प्रभु तेषा समीपे एकां गूढरहस्यकथा प्रकटीकृतवान्। प्रभु अवदत्—यूय दु खिता मा भवत ; अह युष्मान् न परित्यक्ष्यामि, परित्यक्तुं न च शक्ष्यामि अपि। यत —

"सर्वकाल तोमरा सकल मोर सङ्ग।
एइ जन्म हेन ना जानिवा—जन्म जन्म ॥
एइ जन्मे येन तुमि सव आमा सङ्गे।
निरवधि आछ सङ्कीर्तन-सुख ० १६४)
एइ मत आछे आर दुइ अवतार।
कीर्तन-आनन्दरूप हइवे आमार ॥
ताहातेओ तुमि सव एइ मत रङ्गे।
कीर्तन करिवा महासुखे आमासङ्गे ॥
लोक रक्षा निमित्त से आमार सन्न्यास।
एतेके तोमरा सव चिन्ता कर नाश ॥"—

श्रीचै, भा, मध्य २६

लोकपरम्परया प्रभोः सन्न्याससङ्कल्पस्य वार्तां श्रुत्वा श्रीशचीमाता नितान्तं व्याकुला बभूव। ता सान्त्वयितुं प्रभुः

तस्याः समीपे अपि एकां गोप्यकथा प्रकाशयामास। प्रभुः उवाच—"मात', न केवलम् अस्मिन् एव जन्मनि अहं तव पुत्र', प्रतिजन्म त्वम् एव मम माता। कदाचित् त्वं पृश्निः आसीः, तदा अपि त्व मम माता अभू'। ततः पर स्वर्गलोके त्वम् अदिति अभवः, अहञ्च वामनरूपेण तव पुत्र'। तत. पर त्वं देवहूति जाता, तदा अपि अह तव पुत्रः—कपिलनामा। तत. त्व कौशल्या, अहञ्च त्वत्पुत्रो रामचन्द्रः। तत. त्वं मथुराया देवकी, कसकारागारे रुद्धा आसी., तदा अपि अहं त्वत्पुत्र आसम्। अन्यत् अपि शृणु—

आरो दुइ जन्म एइ सङ्कीर्तनारम्भे।
हइव तोमार पुत्र आमि अविलम्बे॥
एइ मत तुमि मोर माता जन्मे जन्मे।
तोमार आमार कभु त्याग नाहि ममे॥
अमायाय एइ सब कइलाङ कथा।
आर तुमि मने दुःख ना पाओ सर्वथा।

श्रीचै, भा, मध्य २६ अ. (पृ० १६५)

चैतन्यभागवते व्यासावतारस्य श्रील-वृन्दावनदास ठाकुरस्य "एइ मत आछे आर दुइ अवतार" इति

"आरो दुइ जन्म एइ सङ्कीर्तनारम्भे।
हइव तोमार पुत्र आमि अविलम्बे॥"

इत्यनयोः उक्त्योः मर्म न सहजबोधविषय.। प्रभुपादः श्रीलः अतुलकृष्णगोस्वामिमहोदय. ततसम्पादितस्य श्रीचैतन्य-भागवतस्य टीकाया लिखितवान् "अनयो. अवतारयोः आसनम्

अधिकतु बहूनाम् एव ऐकान्तिक आग्रहो दृश्यते। एतौ द्वौ अवतारौ कौ स्याताम् इति प्रभु एव पर ज्ञाता" इति।

यत् अस्तु, श्रील-वृन्दावनदास-ठाकुरस्य चरणस्मरणपूर्वकम् इमाम् उक्तिस् आश्रित्य किञ्चित् आलोचयितु यत्यते।

आगामिनि अवतारद्वये प्रभु केन स्वरूपेण अवतरणस्य सूचना दत्तवान्, आदौ तद्विषये एव आलोचना क्रियताम्। शचीमातु. समीपे तेन कथितम्—उभयो एव अवतारयो स "सङ्कीर्तनारम्भे" जन्मलीला प्रकटयिष्यति।

प्रभु स्वीय-पूर्व-पूर्वावतारस्य यत् यत् स्वरूप शचीमातुः समीपे प्रकाशित—पृश्निगर्भात् आरभ्य देवकीपुत्रपर्यन्त—तेषाम् एकम् अपि स्वरूप "सङ्कीर्तनारम्भे" अवातरत् इति न ज्ञायते। केवल गौरसुन्दररूपेण एव स "सङ्कीर्तनारम्भे" जन्मलीलां प्रकटीकृतवान्। अत शचीमातु. समीपे उक्तात् प्रभो वाक्यात् प्रतीयते—आगामिनि अवतारद्वये अपि स. गौरसुन्दररूपेण एव अवतीर्णो भविष्यति। एष एव प्रभो. उक्ते अभिप्राय इति पार्षदसमीपे कथितात् तद्वाक्यात् अपि ज्ञायते। तेषा समीपे तेन कथितम्—

एइ मत आछे आर दुइ अवतार।
कीर्तन-आनन्दरूप हइवे आमार॥ (पृ० १६६)
ताहातेओ तुमि सब एइ मत रङ्गे।
कीर्तन करिवा महासुखे आमा सङ्गे॥

प्रभु स्पष्टेन वचसा कथितवान्—"एइ मत आछे आर दुइ अवतार" "एइ मत" ईदृशौ—इदानी नवद्वीपे यथा सर्वथा तादृशौ

द्वौ अवतारौ—आसाते। तस्मिन् अपि अवतारद्वये—वर्तमान-कलौ ये तेन सह कीर्तनानन्दम् अनुभूतवन्तः,—ते एव प्रभुणा सह इत्थम् एव कीर्तन करिष्यन्ति। भूयोऽपि वारद्वयं तेन नवद्वीपलीला एव प्रकटीकर्तव्या इति प्रभुणा प्रतिपादितम्। नवद्वीपचन्द्र. श्रीश्रीगौरसुन्दरः यदा एव सपार्षदम् अवतरति, तदीय धाम नवद्वीप अपि तदा एव जगति प्रकटीभवति, तत्र एव धामनि तेन लीला क्रियते।

एतेन स्पष्ट विज्ञात—वर्तमानकलौ तेन या लीला प्रकटिता, अविकला सा एव लीला भूय. अपि वारद्वयं तेन प्रकटीकरिष्यते—एतत् एव प्रभूक्तेः तात्पर्यम्।

भगवान् यदा ब्रह्माण्डे अवतरति, तदा स्वीय-नित्य-परिकरवर्गान् गृहीत्वा एव अवतरति। नित्यपरिकराणा प्रत्येकश स्वरूपगतो भावः नाम च नित्यम्, अत. वर्तमान-कले अवतारसमूहे अवतारत्वेन श्रीश्रीगौरसुन्दर. यथा शची-जगन्नाथयोगेन अवतीर्ण, आगामिनि अवतारसमूहे अपि तथा एव शचीजगन्नाथयोगेन एव अवतरिष्यति, तथा वर्तमानकले. परिकरा इव आगामिनि अवतारसमूहे अपि नित्यानन्दाद्वैतगदा-धरश्रीवासमुरारिमुकुन्दादय एव तस्य परिकरा भविष्यन्ति। तेषां नामानि अपि यथापूर्वं स्थास्यन्ति। महाप्रभो. उक्ते अपि तत् परिस्फुट ज्ञायते एव। तस्य पार्षदभक्ताना सान्त्वनार्थ तेन यत् उक्तं तत् पूर्वम् एव (पृ० १६७) समुद्धृतम्। तथा च, तेनोक्तम्—"न तावदत्रैव जन्मनि (अवतारे) यूयं सर्वे मम सङ्कीर्तनसङ्गिन. ; परं मम सर्वकालसङ्गिन एव यूयम्। यूय सर्वकालम् एव मया सह सङ्कीर्तनसुखरङ्गेण

विराजिता । एतदवतारवत् मम अन्यदपि अवतारद्वयं भविष्यति, तत्रापि यूयम् एतदवतारे इव "कीर्तन करिवा महासुखे आमासङ्गे ।" अत्र प्रभुणा स्पष्टेन एव वचसा उक्त— येषां समीपे तेन एषा कथा कथिता, ते सर्वे एव तस्य गौरस्वरूपस्य नित्यपार्षदा । अत प्रभोः सर्वेषु एव अवतारेषु तेषां नाम-रूप-भावादय. एकरूपा. तिष्ठन्ति । तथा स शचीमातरम् अपि कथितवान्—"सङ्कीर्तनारम्भे भूय अपि वारद्वयम् अहं तव पुत्रो भविष्यामि" इति । सङ्कीर्तनारम्भे केवल गौरस्वरूपस्य एव आविर्भावो भवति । शचीमातु. एव योगेन तस्य सर्वं आविर्भावो भवति च । एतेन अपि प्रभुणा शचीमाता विज्ञापिता यत् आगामि-वारद्वये अपि तस्य गौरसुन्दर इति, मातु च शचीदेवी इति नाम भविष्यति इति ।

प्रभुपादस्य श्रीमत अतुलकृष्णगोस्वामिन. उक्त्यनुसार— महाप्रभुकथितयो. द्वयो अवतारयो आसनग्रहणार्थं ये आग्रहान्विता वर्तन्ते, तेषां मध्ये कस्य अपि उल्लिखितानि लक्षणानि सन्ति न वा तत् अपि विवेचनीयम् ।

यद् अस्तु, इदानीं द्रष्टव्य—श्रीश्रीगौरसुन्दर. भूय. अपि वारद्वयं सपरिकर अवतरिष्यति इति यत् प्रकाशीकृतवान्, तत् कस्मिन् काले ? समयविषये प्रभुः किम् अपि न उक्तवान्, उक्ते प्रयोजनम् अपि न आसीत्, यत तस्य अवतरणकाल शास्त्रात् एव ज्ञायते ।

शास्त्रानुसारात् ब्रह्मणः एकस्मिन् दिने स्वयं भगवान् सकृत् एव अवतीर्णो भवति । श्रीश्रीगौरसुन्दर च स्वयं-भगवान्; अत. सः अपि ब्रह्मण. एकस्मिन् (पृ० १६८) दिने

सकृत् एव आविर्भवति । यत· स वर्तमानकलौ सकृत् अवतीर्ण-वान्, अत. वर्तमानकलि: ब्रह्मणो यस्य दिनस्य अन्तर्गत: तस्मिन् दिने स पुन: न अवतरिष्यति इति अपि परिस्फुटम् एव ज्ञायते ।

ब्रह्मण. वर्तमानदिनस्य मनुष्यमानेन कियन्तो वत्सरा अवशिष्यन्ते इति इदानी द्रष्टव्यम् ।

विष्णुपुराणमते, ब्रह्मण एकस्मिन् दिने सत्यादि-चतुर्युगानि प्रत्येकं सहस्रसंख्यया वर्तन्ते । मनुष्यमानेन सत्ययुगस्य परिमाणं १७,२८००० वत्सरा । त्रेताया. १२,९६,००० वत्सरा·, द्वापरस्य८,४६,००० वत्सरा., कले. ४,३२,०००वत्सराश्च । एषा समष्टिरूपम् एकस्य चतुर्युगस्य परिमाण ४३२००००—वत्सरा. । इत्थं सहस्र-चतुर्युगाना परिमाणं--४३२,००००, ०००, एत एव द्वात्रिंशदधिकचतु·शतकोटिवत्सरा. मनुष्यमानेन ब्रह्मण· एकदिनस्य परिमाणम् ।

ब्रह्मण एकस्मिन् दिने, चतुर्दश मन्वन्तराणि भवन्ति, कस्यचन मनो राज्यकालो मन्वन्तरम् उच्यते । इदानी सप्तम-मनो. वैवस्वतस्य राज्यकालो वर्तते । एतस्मिन् वैवस्वते मन्वन्तरे अवसिते अपि ब्रह्मणो वर्तमानदिनमध्ये अपराणि अपि सप्त मन्वन्तराणि अवशिष्टानि स्थारयन्ति । एकस्मिन् मन्वन्तरे एकसप्तति चतुर्युगानि—मनुष्यमानेन ७१×४३२, ००००=३०६७२,०००० वत्सरा वा भवन्ति ।

सप्तमस्य वैवस्वत-मन्वन्तरस्य एकसप्तति-चतुर्युगमध्ये इदानीम् अष्टाविंश-चतुर्युगस्य कलियुगं वर्तते । वर्तमानवर्षे कले: ५०५४ वत्सरा गता:, अवशिष्टा पुन: ४२६९४६ वत्सरा. । अत: अद्य प्रभृति ४२६९४६ वत्सरेभ्य: परं

वैवस्वत-मन्वरन्तस्य अष्टाविश चतुर्युगं समाप्तं भविष्यति। तत. ( पृ० १६त् ) परम् अपि त्रिचत्वारिशत् चतुर्युगानि ४३×४३२,०००० =१८५७६०००० वत्सरा वा अवशिष्टा: स्थास्यन्ति। एतेन सह वर्तमानकले: अवशिष्टाना ४२६९४६ वत्सराणा योगेन समष्ट्या १८५७६,००॓०॓० +४२६९४६=१८६१८६९४६ वत्सरा भवन्ति। स्थूलार्थस्तु—ब्रह्मणो वर्तमानदिनस्य मनुष्यमानेन (अवशिष्टाना सप्ताना मन्वन्तराणा षोडशाधिकद्विशतकोटि-वत्सरान् विना अपि) १८६१८, ६९४६—साधष्टादश-कोट्यधिका वत्सरा अवशिष्यन्ते। एषु वर्षेपु श्रीश्रीगौर-सुन्दरस्य पुन. अवतरणसम्भावना शास्त्रानुसारेण नास्ति।

ब्रह्मण अस्मिन् दिने समाप्ते पुन एक नूतन दिन—मनुष्यमानेन द्वात्रिशदधिकचतु शतकोटिवत्सरपरिमितम् एक दिनम्—आरब्ध भविष्यति, तस्मिन् दिने एकवार तत्पर-वर्तिनि तत्परिमाणे पुन एकस्मिन् दिने एकवारम—इति वारद्वयं प्रभु. यथानियमम् अवतरिष्यति। ईदृश सिद्धान्त विना शास्त्रोक्ते सङ्गति. न भवति।

ननु च, ब्रह्मण प्रतिदिनम् एव श्रीश्रीगौरसुन्दर सकृत् अवतरति, तत् किम् इति केवल वारद्वयावतरणम् उच्यते।

अस्य प्रश्नस्य इदम् उत्तर सम्भाव्यते। मनुष्यमानेन द्वात्रिशदधिकचतु शतकोटिवत्सरै. ब्रह्मण एक दिन भवति, ईदृशै षष्ट्यधिकत्रिशतै. दिनै: तस्य एको वत्सर.; ईदृशा शत वत्सराश्च तस्य आयुष्काल., अय पुन. महाविष्णो· निश्वासत्यागकाल:। ईदृशे सवत्सरे पूर्णे महाप्रलय उप-

तिष्ठति ; महाप्रलयात् परं पुनः सृष्टिप्रारम्भ. । प्रभोः उक्त्या अनुमीयते—ब्रह्मणः आयुष्कालस्य वर्तमान दिनं विना दिनद्वयंमात्रम् अवशिष्यते । अत. परम् एव महाप्रलय. प्रवृत्तो भविष्यति । महाप्रलयस्य पूर्व श्रीश्रीगौरसुन्दरः केवल वार-द्वयम् अवतरिष्यति, वारद्वयावतरणात् (पृ० १७०) परं च महाप्रलयो भविष्यति इति एव प्रभुर्भङ्ग्या बोधयति इति मन्ये । तद् अपि पुनः मनुष्यमानेन किञ्चिन्न्यूनैकादशशतकोटि-वत्सरेभ्य. परम् ।

पुन. अपि प्रश्नः स्यात्—अद्य प्रभृति चतुस्त्रिंशदधिक-द्विशतकोट्यपेक्षया अपि अधिककालात् परं ब्रह्मणो यस्य दिनस्य आरम्भो भविष्यति, तत्र दिने एव यदि प्रभुकथिता-वतारद्वयमध्ये प्रथमावतारकथा तेन कथिता स्यात्, कथ तर्हि तेन "हइब तोमार पुत्र आमि अविलम्बे" इत्यत्र "अविलम्बे" इति कथितम् ? द्विशतकोट्यधिकवत्सरव्यवधानं किम् "अविलम्ब" पदवाच्य भवेत् ?

इदम् अत्र उत्तर सम्भाव्यते । मनुष्यमानेन द्विशतकोट्य-धिका अपि वत्सरा. ब्रह्मणो दिनमानेन नगण्या इति हेतो "अविलम्बे" इति उक्ति सगता एव । श्व. परश्वो वा यद् भविष्यति तथाविधे कार्ये "अविलम्बेन भविष्यति" इति वचन न असङ्गतम् । यत्र काले महाप्रभु एता कथाम् अकथयत्, स कालः ब्रह्मणो वर्तमानदिनमध्ये—ब्रह्मण "अद्यतने" दिवसे वर्तते, ब्रह्मण. श्व. परश्वो वा यद् भविष्यति अद्यतने दिने तद्विषये "अविलम्बेन" घटिष्यत इति उक्ति. न अन्याय्या । प्रभुवाक्यस्य ध्वनितः अपि तद् बुध्यते । भिन्नम् अवतारद्वय

युगपत् न भवेत्। एकस्मात् परम् अन्यो भविष्यति। तथापि प्रभु अवतारद्वयम् एव "अविलम्बेन" भविष्यति इति कथितवान्। अस्य वचनस्य तात्पर्यम् एतत्—द्वयो अवतारयोः मध्यवर्ती काल मनुष्यमानेन कोटिश अपि ब्रह्मणो दिनमानेन नगण्य, तथा पूर्वोक्ते कालात् मनुष्यमानेन यावद्भ्यो वत्सरेभ्य पर प्रथम अवतारो भविष्यति ते अपि (पृ० १७१) नगण्या.। यदि एव व्याख्या न कृता स्यात्, तर्हि शास्त्रोक्त्या सह सङ्गतिः न भवेत्। महाप्रलयात् पर पुन. सृष्ट्यारम्भस्य, तस्या सृष्टौ भगवत अवतरणस्य च भूयान् विलम्ब ; यत., महाप्रलयः अपि महाविष्णो श्वासपरिमित (ब्रह्मण. आयुष्कालपरिमित) काल व्याप्य चलति।

यदि कश्चित् ब्रूयात्—वर्तमानकलौ एव प्रभु भूयो वारद्वयम् अवतरिष्यति इति एव प्रभूक्ते तात्पर्यम् इति। एतत्तु न विचारसहम्। तत्र अयं हेतु। प्रथमत, शास्त्रात् ज्ञायते, यत्र द्वापरे श्रीकृष्ण. अवतरति, तस्य अव्यवहितपरवर्तिनि कलौ एव श्रीश्रीगौर अवतरति। यत्र द्वापरे श्रीकृष्णो न अवतरति तत्परवर्तिनि कलौ श्रीश्रीगौरो न अवतरति, श्रीकृष्णावतारम् अनपेक्ष्य अपि स न कदापि अवतरति। श्रीकृष्ण अव्यवहितपूर्ववर्तिनि द्वापरे अवातरत् इति हेतोः श्रीश्रीगौर अस्मिन् कलौ अवतीर्णवान्। यदि अस्मिन् कलौ एव तेन भूय अपि वारद्वयम् अवतरितव्य तथा सति, श्रीकृष्णः अपि अस्मिन् कलो महाप्रभो पूर्वम् अवतरिष्यति इति मनसि कर्तव्य भवेत्। परम् एतत् न घटते, यत, श्रीकृष्ण केवलं द्वापरे एव अवतरति, कस्मिन् अपि कलौ तस्य अवतरणकथा

न श्रूयते । द्वितीयत., द्वापरलीलाया श्रीकृष्णस्वरूपेण कृतस्य जगति रागधर्मप्रचारस्य यः अंशः अपूर्णं तिष्ठति, तस्य अंशस्य पूरणार्थम् (प्रेमदानार्थम्) एव स्वय भगवान् श्रीश्रीगौर-रूपेण अवतीर्णो भवति, पूर्णें च प्रेमदानकर्मणि सः अन्तर्धत्ते । अस्मिन् कलौ अपि स प्रेमदानार्थम् एव अवातरत् । इदं प्रेमदानकर्म सम्यक् पूर्णम् अभवत् इति अद्वैताचार्यो जगदानन्द-पण्डितद्वारा प्रहेलिकया प्रभु विज्ञापितवान् । (पृ० १७२)

वाउलके कहिय लोके हइल वाउल ।
बाउलके कहिय हाटे ना विकाय चाउल ॥
वाउलके कहिय काजे नाहिक आउल ।
वाउलके कहिय इहा कहियाछे वाउल ॥

श्रीचैं, च, ३।१९।१९-२० ॥

स्वरूपदामोदरस्य जिज्ञासया प्रभुः भङ्ग्या अस्याः प्रहेलिकायाः तात्पर्यं प्राकाशयत् ।

प्रभु कहे—आचार्य हय पूजक प्रवल ।
आगम-शास्त्रेर विधि-विधाने कुशल ॥
उपासना-लागि देवेर करे आराधन ।
पूजा लागि किछुकाल करे निरोधन ॥
पूजा-निर्वाह हैले पाछे करे विसर्जन ।

श्रीचैं, च, ३।१९।२४-२६

प्रभुः भङ्ग्या अबोधयत्—"जगति प्रेमवितरणार्थम् अद्वैताचार्यो माम् आहूतवान् । यावत् प्रेमवितरण-कार्यं प्रचलितं, तावत्कालं माम् अत्र जगति स्थापयितुं तेन प्रयोजनम्

अनुभूतम् । इदानी तस्य प्रयोजन सिद्धम् अभूत्, सर्वे एव प्रेम लव्धवन्त, न के अपि प्रेमप्रार्थिन अवशिष्यन्ते। अत. सः (अद्वैताचार्य.) इदानी मा विसर्जयति---ज्ञापयति च---अहम् इदानीम् अन्तर्धातु शक्नोमि" इति ।

प्रभो. इद वचन श्रुत्वा प्रभोः अन्तर्धानाशङ्कया

"स्वरूपगोसाञि किछु हइला विमन ॥

श्रीचै, च, ३।१९।२८ ॥"

प्रहेलिकाप्राप्ते परतः एव प्रभो भावान्तरम् आगतम् ।

सेइ दिन हैते प्रभुर आर दशा हैल।
कृष्णेर विच्छेद-दशा द्विगुण वाडिल ॥ श्रीचै, च, २१९।२९

प्रकटलीलाया प्रभो कार्यद्वयम् अस्ति---प्रेमवितरणम्, श्रीराधाभावेन कृष्णमाधुर्यास्वादन च । शेपोक्त कर्म प्रकटा-प्रकटयो तुल्यम् एव चलति । केवल प्रेमदानार्थम् एव लीलाप्रकटनम् , न तु माधुर्यास्वादनार्थम् ; यत एतत् अप्रकटे अपि भवितुम् अर्हति। इदानी प्रकटत्वस्य जीवसम्बन्धि मुख्य कार्य प्रेमवितरण सम्पूर्णम् इति हेतो प्रभु केवल स्वमाधुर्यास्वादने एव निविष्ट अस्ति, लीला सहतु च सज्जो भवति, कियत्कालात् परम् अप्रकटः आसीत् च । एतस्मात् एव ज्ञायते---प्रकटावस्थानस्य उद्देश्यसिद्धे अनन्तरम् एव स अप्रकटो वभूव । भूयः किमर्थ स अस्मिन् कलौ अवतरिष्यति ।

स्यात् एवम्,---ये प्रभो. प्रकटकाले न जाता अत एव च प्रेम न प्रापु तेषां कृते स पुन अवतरितुम् अर्हति ? एतत् प्रयोजनम अपि प्रभुणा समापितम् । एवविधानाम् एव कृते

प्रभुः श्रीश्रीरूपसनातनयोगेन विस्तृता भजनप्रणाली व्यवस्थापितवान् । तदनुसरणक्रमेण कृतभजनेभ्य. अपि प्रभु· प्रेम दास्यति---अयम् एव प्रभो अभिप्राय. । अत· परकालभाविना मानवाना कृते अपि अस्मिन् एव कलौ प्रभो· पुनः अवतरणस्य कोऽपि हेतुः नास्ति ।

पूर्वस्मिन् कल्पे प्रभुः यदा अवततार, तदा अपि प्रेमभक्ति ददौ भजनप्रणाली च व्यवस्थापयामास । ततः परम् एतदवतारस्य पूर्वं च भूय· प्रेमभक्ति न वितीर्णवान्---अतएव न अवतीर्णवान् च---स्वय भगवत· स्वोक्त्या एव तज् ज्ञायते--

चिरकाल नाहि करि प्रेमभक्तिदान ।
भक्ति विना जगतेर नाहि अवस्थान । श्रीचै, च, १।३।१२

पूर्वकल्पप्रचारिता भजनप्रणाली अपि कालवशात् लुप्तप्राया आसीत्, तस्याः पुन· प्रवर्तनार्थम् एव च प्रभुः इदानीम् अवतीर्णवान् । श्रीपाद-सार्वभौमभट्टाचार्यः अपि तत् उक्तवान् ।

कालान्नष्टं भक्तियोग निज य· प्रादुष्कर्तुं कृष्णचैतन्यनामा ।
आविर्भूतस्तस्य पादारविन्दे गाढ गाढं लीयता चित्तभृङ्ग ॥ इति ।

पूर्वकल्पावतार वर्तमानकल्पावतार· च एतन्मध्यवर्तिनां दीर्घ-दीर्घसमयाना मध्ये अपि प्रभुः यतो न अवतीर्णवान् ; अतः अस्मिन् कलौ एव तस्य भूय· अपि वारद्वयम् अवतार-कल्पना न युक्तिसगता न च शास्त्रसम्मता अपि ।

ये महाप्रभोः प्रकटकाले तिष्ठन्ति जन्म वा गृह्णन्ति, केवलं तेभ्य. एव निर्विचार प्रेम दातु स· अवतीर्णो भवति । भजनादिनिरपेक्षं निर्विचारं सर्वसमयवर्तिभ्यो लोकेभ्य. प्रेम-

वितरणम् एव यदि प्रभोः अभीष्टं स्यात् तर्हि नित्यकालम् एव तेन ब्रह्माण्डे प्रकटितेन स्थातव्य स्यात्, कदा अपि तस्य अन्तो न सम्भवेत् । यत प्रभौ (पृ० १७५) सकृत् अन्तर्धाय कियत्कालात् अनन्तर आविर्भूते सति अन्तर्धानाविर्भावयो· अन्तराले ये जन्म गृहीत्वा मरिष्यन्ति अपि, ते प्रेमलाभे वञ्चिता भविष्यन्ति । वस्तुत, प्रभो अन्तर्धानात् परं ये जनिष्यन्ते, प्रेमप्राप्तिविधौ तेषा भजनम् एव केवल उपाय· ; एतदर्थम् एव प्रभुः भजनप्रणाली प्रवर्तयति । स वर्तमानकलौ पूर्वपूर्वकल्पे अपि लीलाया आविर्भाव तिरोभाव च यत् अकारयत् तेन अपि पूर्वोक्त विधानम् एव प्रमाणित भवति ।

अत १४५५ शकाब्दे प्रभो अन्तर्धानात् पर ये जाताः तेषाम् अर्थे स भूय. अवतरितु शक्नुयात्—इदम् अनुमानं युक्ति वा न विचार सहते ।

यद् अस्तु, एतावद्भि आलोचनै. ज्ञात—श्रीचैतन्यभागवतस्य उक्ति पूर्वोल्लिखितस्य शास्त्रीयप्रमाणस्य न व्यतिक्रमरूपा । अस्ति अस्या तेन शास्त्रप्रमाणेन सह सङ्गति ।

———

## नाम-सङ्कीर्तनम्

श्रीमन्महाप्रभु कथितवान्—"नाम-सङ्कीर्तन कलौ परम उपाय ॥—श्रीचै, च, ३।२०।७॥'

नामसङ्कीर्तनं परम उपाय इत्युक्तेः एको हेतु प्रभुवाक्यात् एव ज्ञायते । स उक्तवान्—

भजनेर मध्ये श्रेष्ठ नवविधा भक्ति ।
कृष्णप्रेम कृष्ण दिते धरे महाशक्ति ॥
तार मध्ये सर्वश्रेष्ठ नाम-सङ्कीर्तन ।
निरपराध नाम हैते हय प्रेम-धन ॥

श्रीचै, च, ३।४।६५-६६

नाम-नामिनो अभेदात् एव नाम्न एतावान् महिमा। अन्यत् एकम् अपि भजनाङ्गं नामिना सह अभिन्नं नास्ति ।

महाप्रभुः अन्यत् अपि उक्तवान्—'नवविधा भक्ति पूर्ण हय नाम हैते"—श्रीचै, च, २।१५।१०८॥ अस्य अयं ध्वन्यर्थः, यत्, नवविधाया भक्तेः अनुष्ठानेन सह नामसङ्कीर्तनम् अपि कर्तव्यम्, अन्यथा तत् अनुष्ठानम् असम्पूर्णं स्यात् ;

नामसङ्कीर्तनस्य -श्रेष्ठत्वे अन्य. अपि हेतुः अयं यत्, साधकसमाजे यावन्त. साधनस्य पन्थान· प्रचलिताः सन्ति तेषां प्रत्येकम् उपरि एव नामसङ्कीर्तनस्य व्याप्तिः वर्तते। इयं व्याप्ति द्विधा—आनुषङ्गिक-साहचर्यदान-रूपेण व्याप्तिः स्वतन्त्रव्याप्ति· च इति ।

कर्म-योग-ज्ञानमार्गाणा साधने साहचर्यदानरूपेण व्याप्ति· । "भक्तिमुख-निरीक्षक कर्म-योग-ज्ञान ॥' श्रीचै, च, २।२२। १४॥ भक्ते साहचर्य विना कर्म-मार्गस्य योगमार्गस्य ज्ञान-मार्गस्य वा साधन स्व स्व फल दातुम् असमर्थम् । (पृ० १७७) अत· कर्ममार्गे, योगमार्गे ज्ञानमार्गे च साधनस्य सहाय-रूपेण भक्तेः व्याप्ति अस्ति । अपरतश्च भक्त्यङ्गेषु नाम-सङ्कीर्तनस्य एव सर्वश्रेष्ठतया कर्मयोगादिषु सहायरूपेण नाम-सङ्कीर्तनस्य अपि व्याप्ति. अस्ति ।

स्वतन्त्ररूपेण व्याप्तिः। कर्म-योग-ज्ञानादिमार्गेषु येषां साधनाङ्गानां व्यवस्था शास्त्रे कृता, तेषां साधनाङ्गानाम् अनुष्ठानम् अकृत्वा, स्वीयम् अभीष्टं चित्ते धृत्वा यदि केवलं नामसङ्कीर्तनम् एव क्रियेत, तथा सति अपि भिन्न-भिन्न-पथानां साधकः अभीष्टं फलं लब्धुं शक्नुयात्। नाम-सङ्कीर्तनं स्वतन्त्रतया एव तत्तत् फलं दातुं समर्थम्। तथा च भागवते—

एतन्निर्विद्यमानानामिच्छतामकुतोभयम्।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम्॥

श्रीभा, २।१।११

अत्र इच्छताम् इति फलाकाङ्क्षिणां कर्ममार्गे, निर्विद्यमाना-नाम् इति मुमुक्षूणां ज्ञानमार्गे योगिनाम् इति योगमार्गे च अकुतोभयं विघ्नादिशङ्कालेशशून्यं हरेः नामानुकीर्तनम् एतत् निर्णीतम् इत्यर्थः। वराहपुराणात् अपि ज्ञायते—

नारायणाच्युतानन्त वासुदेवेति यो नरः।
सततं कीर्तयेत् भूमि याति मल्लयतां स हि॥इति। (पृ० १७८)

—श्रीह, भ, वि, ११।२२१ धृतवचनम्।

नामसङ्कीर्तनात् चतुर्विधां सालोक्यादिमुक्तिं लब्ध्वा साधकः वैकुण्ठे विष्णुलोके वा पार्षदत्वम् अपि लब्धुं शक्नोति। बृह-न्नारदीयपुराणे वर्तते—

जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम्।
विष्णुलोकमवाप्नोति पुनरावृत्तिदुर्लभम्॥ इति

श्रीह, भ, वि ११।२२१ तद्वचनम्।

एतेन एतत् आयात यत्,—सकामाः साधकाः ऐहिक पारत्रिकं च सुखभोगादिकम् आरभ्य पञ्चविधा मुक्ति यावत् नामसङ्कीर्तनात् एव केवलात् लब्धु शक्नुवन्ति। कामं सालोक्याद्या चतुर्विधा मुक्ति. ऐश्वर्यज्ञानमिश्रस्य भक्तिमार्गस्य फलम्, परम् एतत् न नामसङ्कीर्तनस्य समग्र फल न वा मुख्य फलम् अपि। नामसकीर्तनस्य मुख्य फल तु—प्रेम, भगवद्विषयकं प्रेम, येन भगवान् परां प्रीतिं लभते, भक्तस्य वशीभूतश्च भवति।

ये रसिक-शेखरस्य व्रजेन्द्रनन्दन-श्रीकृष्णस्य चरणसेवाभिलाषिण· ते न सालोक्यादिमुक्ति कामयन्ते, भगवति स्वयं ता मुक्तिं दातुम् अभिलाषवति अपि ते तां न गृह्णन्ति। तथा च—

सालोक्य-सार्ष्टि-सा प्य-सामीप्यैकत्वमप्युत।
दीयमान न गृह्णन्ति विना मत्सेवनं जनाः॥

श्रीभा, ३।२९।१३

तेषां प्रेम एव मुख्यं काम्यम्, यत् प्रेम कृष्णसुखैकतात्पर्यमय्याः सेवाया एकमात्र उपायः। (पृ० १७९)

यथा-कथञ्चित् नाम्नो नामाभासस्य वा उच्चारणात् एव निरपराधस्य मुक्तिलाभः सम्भवति ; पर न तेन प्रेमलाभो भवति।

प्रेमलाभार्थ कथ नामकीर्तनं कर्तव्यम् इति अपि श्रीमन्महाप्रभुः निगदितवान्।

तृणादपि सुनीचेन तरोरिव सहिष्णुना।
अमानिना मानदेन कीर्तनीय सदा हरि.॥

निम्नलिखितैः पद्यै अस्य श्लोकस्य तात्पर्य प्रकाशितवान् च।

उत्तम हञा आपनाके माने तृणाधम ।
दुइ प्रकारे सहिष्णुता करे वृक्षसम ॥
वृक्ष येन काटिलेह किछु ना बोलय ।
शुखाइया मैले कारे पानी ना मागय ॥
येइ ये मागये, तारे देय आपन धन ।
घर्म वृष्टि सहे आनेर करये रक्षण ॥
उत्तम हञा वैष्णव हवे निरभिमान ।
जीवे सम्मान दिवे जानि कृष्णेर अधिष्ठान ॥
एइ मत हञा येइ कृष्णनाम लय ।
कृष्णेर चरणे तार प्रेम उपजय ॥

—श्रीचै, च, ३।२०।१७-२१

प्रेमप्राप्त्यर्थ नामसङ्कीर्तने कर्तव्ये अन्यौ द्वौ अपि विषयौ लक्षणीयौ ।

प्रथमत, सासङ्गभावेन नामकीर्तन कर्तव्यम्, अय भाव. —श्रीभगवत साक्षात् उपस्थिति चिन्तयित्वा "तस्य एव प्रीत्यर्थ नामसङ्कीर्तन क्रियते" इति ईदृश भावं मनसि पोषयता कीर्तन कर्तव्यम् इति (पूर्व १७७-७८ पृ० द्रष्टव्यम्) ।

द्वितीयत, नामसङ्कीर्तन व्रतत्वेन ग्रहीतव्यम् । श्रीमद्-भागवतस्य

"एवव्रत स्व-प्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चै ।
हसत्यथो रोदिति रौति गाय-
त्युन्मत्तवन्नृत्यति लोकवाह्य ॥ ११।२।४०॥

अस्मात् श्लोकात् ज्ञायते, नामसङ्कीर्तनं व्रतरूपेण गृहीतं चेत् प्रेम लभ्य भवेत् ।

यत् अविचलभावेन नित्यम् अनुष्ठित भवति तत् व्रतम् इति उच्यते । प्रत्यहम् अविचलित निर्दिष्टसंख्यकेषु नामसु कीर्त्यमानेषु एव नामसङ्कीर्तनं व्रतरूपेण गृहीतम् इति वक्तव्यम् । श्रील-हरिदासठाकुरेण नियमतः प्रतिमास कोटि-सख्यकं नाम गृहीतम् आसीत् । अविचलितभावेन च तेन तत् कृतम् । सख्यारक्षणपूर्वकं नामकीर्तने अकृते व्रतत्वं न रक्षित भवेत् । प्राचीना महाजनाः, किम् अन्यत् श्रीमन्-महाप्रभु. अपि सख्यारक्षणपूर्वक नामकीर्तनम् अकरोत् ।

व्रतरूपेण गृहीत निर्दिष्टसख्यक नाम हरिनाममालया एव कीर्तनीयम् । अन्यथा सख्यारक्षणसौकर्य न स्यात् । व्रतरूपेण या सख्या गृह्यते, क्वचित् तस्या. न्यूनताया व्रत-भङ्गो भवेत् । आधिक्ये तु न क्षति, यत, सर्वदा नाम-कीर्तनम् एव विधीयते । सर्वदा नामकीर्तनम् असम्भवम् इत्यतो निर्दिष्टसख्यया कीर्तनस्य उपदेशः कृत ।

सख्याया पूर्णाया सख्याया आधिक्ये वा असख्यात-नाम-कीर्तनम् अपि दोषाय न मन्ये । यतः श्रीमन्महाप्रभुः कथितवान्—(पृ० १८१)

खाइते शुइते यथा-तथा नाम लय ।
देश-काल-नियम नाहि, सर्वसिद्धि हय ॥

श्रीचै, च, ३।२०।१४

"खाइते शुइते यथा-तथा" नामग्रहण संख्यारक्षापूर्वकं न

सम्भवित । एतेन एव ज्ञायते—असख्यात नाम न अविधेयम् इति ।

कश्चन नामविशेष· नाममाला वा असख्यात न कीर्तनीया ईदृशो निषेध. क्वापि शास्त्रे न दृश्यते, श्रीमन्महाप्रभु· अपि तत् न उक्तवान् । तत्र व्रतरूपेण गृहीत नाम तु संख्या-रक्षणपूर्वकम् एव कीर्तनीयम्—इति एतत् पूर्वे महाजना. श्रीमन्महाप्रभुश्च स्वयं आचर्यं दर्शितवान् ।

नाम-नामिनो अभिन्नतया नामी इव नाम अपि स्वतन्त्रम्—विधिनिषेधयो अनधीनम् । नाम स्वप्रकाशं, कृपा प्रदर्श्य भाग्यवत. जिह्वादौ आत्मप्रकाशं करोति । मलमूत्र-त्यागादिकाले निद्राकाले वा यदि कस्यचन जिह्वाया नाम आत्मप्रकाश करोति तदा क्व वा सख्यारक्षणप्रश्न ?

भगवत सर्वम् एव नाम महामन्त्र । महामन्त्रशब्दस्य तात्पर्य पुन. एतत्, यत्, मन्त्र इव महामन्त्रो विधिनिषेधयो. अपेक्षा न करोति । एतदर्थम् एव नाम कदा अपि "दीक्षा-पुरश्चर्या-विधि अपेक्षा ना करे" । एतदर्थम् एव च "खाइते शुइते यथा-तथा" नामग्रहणविधि । दीक्षामन्त्रस्तु दीक्षा-पुरश्चर्ये 'अपेक्षते, यत्र कुत्र यया कया अप्यवस्थया च न जप्य ।

गृही सन्न्यासी वा, पुमान् स्त्री वा, बालो वृद्धो वा—य. कश्चन, यत्र कुत्र स्थाने, यदा कदा, यस्या कस्याम् अपि अवस्थाया (अशुद्धावस्थायाम् अपि) नाम कीर्तयितु शक्नोति । अत एव महाप्रभु कथितवान्—"सर्वदेश-काल-पात्र-दशाते व्याप्ति यार" । इति । (पृ० १८२)

श्रीमन्महाप्रभोः चरणानुगताः गोस्वामिपादगणाः पुनः उच्चसंकीर्तनस्य एव भूयसी प्रशसा कृतवन्त । श्रीमन्महाप्रभुः अपि तारकब्रह्म-नाम-कीर्तनम् उच्चैः एव चकार । श्रूयते श्रील-हरिदासठाकुर. अपि लक्ष-सख्यक नाम उच्चैस्वर गृहीतवान् इति । (अस्मिन् विषये विशेषसमालोचना श्रीश्रीचैतन्यचरितामृत-तृतीयसस्करणस्य ३।२०।७ पद्यस्य गौरकृपातरङ्गिणीटीकाया द्रष्टव्या) ।

नाम परम-मधुरम् आनन्दसमुद्रम् उद्वेल करोति ; नाम्नः प्रतिपदं प्रत्यक्षरं पूर्णामृतस्य आस्वादन लभ्यते । मायामलिनचित्तो जीवस्तु नाम्न इद माधुर्य न अनुभवति । रसगोलिका परम-स्वादीयसी अपि यदि कदलीपत्रान्तरिताया जिह्वाया स्थाप्येत तर्हि जिह्वा तस्याः स्वाद न लभेत । अस्माक जिह्वादयः अपि दुर्वासनारूप-कदलीपत्रेण आच्छादिता वर्तन्ते ; अत एव जिह्वादिभि सह नाम्न. स्पर्शो न भवति । नाम्न एव कृपया इदं कदलीपत्रम् अपसृतं चेत् भवति तदा एव आस्वादन लब्धु शक्यम् । "चेतोदर्पणमार्जनम्" इत्यादिश्लोकेन महाप्रभुः तद् एव उक्तवान् ।

नाममाधुर्यस्य आस्वादनचमत्कारित्वम् एतावत् अधिकं येन पूर्णकाम· आनन्दस्वरूपः सन् अपि रसिकशेखरो भगवान् नाममाधुर्यस्य आस्वादनार्थ लोलुपो वर्तते । अत एव तेन उक्त—"मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ।" इति । राधाकृष्णमिलितविग्रहः श्रीश्रीगौरसुन्दर. अपि नाममाधुर्यास्वादनार्थ लोलुपः—इति तु पूर्वम् उक्तम् (१००-१०१) । अत एव च तस्योपासनस्य प्रधानतम उपचार. अपि नाम-

सङ्कीर्तनम् । "यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः। श्रीभा, ११।५।३२।।"—भाग्यवान् यो नामसङ्कीर्तनरूपम् अमृतरस तस्मै उपहरति, तं प्रति प्रीत. श्रीश्रीगौरसुन्दरः तस्मै आत्मानम् अपि ददाति—मदनमोहनरूपापेक्षया अपि अपूर्वस्य अनिर्वचनीयस्य माधुर्यचमत्कारित्वमयस्य स्वीय-रूपस्य माधुर्य तम् आस्वादयति ।

---

## उपसंहारः

श्रीपादस्वरूपदामोदरस्य 'कडचा' ग्रन्थस्य यं श्लोकम् अवलम्ब्य आलोचना प्रारब्धा, तत्र श्लोके श्रीमन्महाप्रभोः तत्त्वविषये यत् उक्त तत् सम्यक् शास्त्रसम्मतम् इति पूर्व-वर्तिन्या आलोचनया स्फुट विज्ञातम् ।

श्रीराधया सह एकत्वप्राप्तिवशात् गौरवर्ण. स्वय भगवान् श्रीकृष्ण विशेषकलौ ब्रह्माण्डे अवतीर्य सन्न्यासग्रहणपूर्वकम् आपामर-साधारणेभ्य प्रेम वितरति इति, तस्य दर्शनेन अपि जन प्रेमभक्ति लब्ध्वा स इव प्रेमवितरणशक्ति लभते इति, श्रीराधाभावेन आविष्टो भूत्वा स यत् स्वीयमाधुर्यम् आस्वा-दयति इति च शास्त्रवाक्यालोचनया लब्धम् । वर्तमान-विशेषकलौ अवतीर्णे श्रीमन्महाप्रभौ श्रीकृष्णचैतन्ये अपि यत्

अमूनि लक्षणानि विराजितानि, श्रीकृष्णस्य स्वयंभगवत्ताया विशेषलक्षण महाभावस्वरूपाया. श्रीराधाया विशेषलक्षणम् अपि तत्र विद्यमानम् इति च दर्शितम्। अतः श्रीकृष्ण-चैतन्य एव राधाभावद्युतिशवलितं कृष्णस्वरूपम् इत्यत्र शास्त्रविश्वासिना न कश्चित् सशय. स्यात्।

सर्वत्र मृगये कृष्णचैतन्यस्य प्रसन्नताम्।

---

श्रीकृष्णचैतन्यार्पणमस्तु

---

वङ्गाब्दे १३६० कार्त्तिकस्य पञ्चमदिवसे गुरुवारे श्रीश्रीलक्ष्मीपूर्णिमायाम्।

[ १३६३ वङ्गाब्दे श्रावणस्य द्वितीयदिवसे बुधवासरे संस्कृतानुवादः समाप्तः। ]

## APPENDIX I

"Gaudiya Vaishnava Darsana" Vol. I. by Dr. Radha Govinda Nath M. A., D. Litt.

[Publisher—Dr. J. B. Chaudhuri, Ph. D. (London) from Pracyavani Mandir, 3, Federation Street, Calcutta-9. Price Rs. 16/-]. Works on the Philosophy of Gaudiya Vaishnavism (including Theology as propounded by Sri Krishna Chaitanya Mahaprabhu, popularly known as Lord Gauranga) have been produced by the great Vaishnava Acharyas, who are the contemporaries of Sri Chaitanya Deva. Sri Rupa (the author of Bhakti-Rasamrita-Sindhu and Ujjala Nilamani), Sri Sanatana (the commentator of Laghu-Bhagavatamrita etc. on the Bhagavata and author of Brihat-Bhagavatamrita etc.), Sri Jiva (the compiler of the six Sandarbhas) and other Goswamins left us a rich legacy of Vaishnava Philosophical literature, especially of the Gaudiya School. Srila Viswanath Chakravarti's Madhuryya Kadambini and Srimat Baladeva Vidyabhushan's Gobinda Bhashya (commentary on the Vedanta Sutra) and the Pithakas thereon (contained in his Siddhanta Ratna), were preceded by Srila Narottam Das Thakur's Premabhakti Chandrika and Prárthanás, which indeed laid the germs of devotional culture and spiritual outlook, and served as a solid foundation, on which a full-fledged philosophical system could be built up. The names of Swarupa Damodar and Raghunath Das must be specially mentioned here

as the earliest propounders of Sri Chaitanya's Philosophy and Theology, to whom the great composer of the Gospel of Lord Gouranga (Sri Krishnadas Kaviraj Goswami of sacred memory) was largely indebted for the philosophical and theological concepts elaborated in his world-famous work, Sri Sri Chaitanya Charitamrita. As a matter of fact, it is from the teachings of Lord Gouranga as expounded by this illustrious author that all subsequent interpretations of the philosophy and theology of Sree Chaitanya Mahaprabhu had their origin. Sri Rasik Mohan Vidyabhushan (the author of Sri Rupa Sanatan Siksha and biographies of Rai Ramananda, Swarup Damodar and Raghunath Das etc), Sri Sisir Kumar Ghosh (the author of Amiya Nimai Charit and Lord Gouranga, Sri Probodhananda Saraswati and Gopal Bhatta), Srila Bhakti Benode Thakur (author of Jaiva Dharma and Srikrishna Samhità), Prof. Nisikanta Sannyal (author of Sri Krishna Chaitanya and Vaishnavism, Real and Apparent), Pandit Sri Kanupriya Goswami (author of Jiver Swarup and Swadhatma), Pandit Sundarananda Vidyabinode author of Goudiya Vaishnava Darsan—Its History and Special Characteristics, Achintya Bhedabheda and Goudiyas' Three Thakurs—all in Bengali) had already explored the field of Gaudiya Vaishnava Philosophy in a commendable manner. But none had chalked out a plan or outline for such a comprehensive and systematic treatment as the work of Dr, R. G. Nath, entitled Gaudiya Vaishnava Darsana lying on our table. This volume is only the first part dealing with the concept of Brahma, to be followed by

Parts II, III, and IV perhaps, which will acquaint us with the concepts of Jiva and Jagat, (or the Individual and the World) and the *summum Bonum* or the highest spiritual goal of life, as upheld by Goudiya Vaishnava Darsan. The work is a fitting culmination of the labours of an eminent Vaishnava scholar and devotee who has already earned an all-India reputation by his monumental work, the Goura-Kripa Tarangini Bhashya of Sri Sri Chaitanya Charitamrita (in six volumes, comprising an exhaustive Preface or Introduction and an Appendix with the supplement of Index and illuminating articles on very useful topics). His *Gaura Tattva* and *Goura Karunar Vaisīshtya* are glorious products, not only of his vast studies on the Life, Character and Teachings of Lord Gouranga, but also of his own depth of insight and sublimity of devotional experiences. A writer of such valuable treatises in his eightieth year may rightly be honoured as an Epoch-maker of true genius and originality. In the Publisher's Note, Dr, J. B. Chaudhuri says, "Gaudiya Vaishnava Dharma is the very life of Bengal. It is very rare indeed in the world history to find a parallel of the manner in which all the aspects of Bengal's Culture were developed by the holy stream of this mighty universal religion". In the absence of special knowledge of the public on the original root of the philosophical theories of this sublime religion, a good deal of quite wrong and erroneous impressions have cropped up in the minds of the people in general, concerning the truth about Sree Radha-Krishna Bhajan. For this reason, a work like the present

volume is an indispensable necessity for the intelligentsia as well as the public in general". We entirely agree with the Publisher and fully support his conclusion:—"Gaudiya Vaishnava Darsana is so perfect in all its parts, that there is no second work with such detailed analysis, scientific reasoning and philosophical discussions. All the fundamental principles of Vaishnava Philosophy have been beautifully expounded by the most revered author, who is a great devotee and follower of the Bhágavata Dharma...The stream of Bhakti flowing like the Ganges, which has been liberated by the author through the medium of this work, will flow uninterrupted for long and fertilise for ever the soil of the mind."

The author mentions in his Preface how he felt from time to time the necessity for such a work on special grounds—a work in which may be laid down the philosophical conclusions (*siddhántas*) enunciated by the Supreme Lord (Mahaprabhu) and expounded by the Vaishnava Acharyas and Goswamins who took shelter at His lotus feet, in a manner befitting the present age. It is really inscrutable how a Punjabi Sadhu (who was inspired by the study of "Lord Gouranga" to give up his medical studies and to dedicate his life to the service of Sri Chaitanya Mahaprabhu) Sri Hari Babaji of Vrindaban, conveyed his request through a Bengalee Devotee (Sri Arun Kumar Ghosh) to Dr. Nath for writing a work on Gaudiya Vaishnava Philosophy and presented to Dr. Nath a fountain pen for the purpose. This served as an incentive coming indeed as an inspiration

from Sri Gouranga Mahaprabhu and the author had no other alternative than to submit to His command. As he says himself, "I have endeavoured to record only what He has inspired me by grace. Sriman Mahaprabhu has inconceivable power and can get His desired task accomplished even through the medium of a lifeless doll." While appreciating the Vaishnava humility of the author, we know full well that the Lord has chosen a fit and worthy servant of His as the agent or instrument for the realisation of His will and propagation of His Divine Philosophy of Prema-Bhakti.

The volume is entitled "Gaudiya Vaishnava Darsana"—or the Philosophy of Gaudiya Vaishnavism—usually known as "Achintya Bhedabheda" or the Doctrine of inconceivable (simultaneous) Co-existence of Difference and Non-Difference in Divinity The work is divided into seven sections viz. (1) Brahma Tattva or Sri Krishna Tattva, subdivided again into two parts—(a) Goudiya conception and (b) the same concept as treated in the three Prasthānas (approach-roads—the Upanishads or Sruti, the Gitá or Smriti and the Brahmasutra or Vedanta philosophy as Nyáya—based on logic or reasoning with criticism thereon, (2) Theory of Jiva or concept of Individuality; (3) Theory of Creation (cosmogony), (4) Relation of the World and the Individual to Brahma—Inconceivable Co-existence of Bheda (Distinction) and Abheda (Non-distinction), (5) The concept of Goal and the method of its Realisation, (Sadhya-Sadhana, Moksha and Purushàrtha (Summum Bonum), (6) Concept of Love (Prem), (7) Theory of Rasa (taste or enjoyment of Love.

The concept of Bhakti (Loving Devotion) has been fully discussed everywhere along with the views of the three Prasthànas, the teachings of other Acharyas etc. The unique and distinctive special characteristic of Goudiya Vaishnava Philosophy will be apparent from the author's treatment of the Doctrine of Achintya Bhedabheda, Bhaktitattva, Prematattva and Rasatattva. The author has tried to expound each of these doctrines with inexhaustible informations about the sources and lucid interpretation of different view-points in a manner that each part or section may be regarded as self-contained, self-sufficient and self-explanatory. He has in criticising the views of others, told the truth, however unpalatable they may be, on the Sastric authority, holding that it is well and conducive to welfare to tell the truths that are beneficial, as pointed out by the Publisher.

On analysing the contents of the first volume one will find an inexhaustible store-house of philosophical topics which are rarely combined in one and the same work. A few of these are quoted below as a sample of the learned author's profound knowledge.—In the Preface, Origin of the various philosophical doctrines and the causes of variation in their outlooks—the Systems of Charbaks, Buddhists, Jainas, Sankhya, Yoga, Nyaya, Vaiseshika, Purva Mimamsa and Uttara Mimamsa or the Vedanta—Methods of its approach and truth of its Conclusions—Brahmatattva in the Vedanta Sutras and Sankara's interpretations, criticisms of Sankara's theory, *saguna* and *savisesha* Brahma as opposed to *Nirguna* and *nirvisesha* Brahma, theory of Creation and

Evolution—the views of Goudiya Vaishnava Acharyas, Theory of Sadhan and Salvation, Mâyāvâd and Vivartavâd in Sankara—Sankara's philosophy viewed as Buddhistic in disguise. Achintya Bhedabheda and modern science—its relation with Advaya Jnana, Goudiya Philosophy on Love (Prema) as Ultimate Reality, Summum Bonum, Prematattva and Rasatattva as the special differentiating features of Goudiya Vaishnavism—its Liberalism and Non-sectarianism. Initiation by a Guru, irrespective of caste and colour—Vaishnavism and worship, religious and social manners customs and conduct—Salvation and Jivanmukti—Relation between Goudiya Vaishnavism and Madhva Sampradaya—Its attitude towards Renunciation, Renaissance and Reformation in Religion—*Svakiya* and *Parakiya* in Bhajan, Goudiya Vaishnavism treated as wholly and entirely a perfect Srauta Dharma.

In the Introduction—Basis or Foundation of Goudiya Vaishnava Philosophy, Pramánas classified—Sastras as Apaurusheya (Impersonal in origin)—Puranas of 3 classes—Itihása and Puràna as the fifth Veda—Superiority of Srimad Bhagavata—its Manifestation, Parama Dharma defined—Perception or Intuition of sages, methods of Interpretation of words—Vedas, Upanishads, their number and name.

(Part I, section I Brahmatattva)—Meaning and Purport of the word Brahma—Sakti, Natural and Eternal, Sakti of Brahma—threefold (1) Swarupa (2) Máyá and (3) Jiva—Three Vrittis of Swarupa Sakti—Sandhini,

Samvit and Hladini—Three Gunas of Màya, Sattva, Raja and Tama—Nature of Màyà—different meanings of the word—Parà and Aparà Vidyá—Murtta and Amurtta Sakti—Para Brahma as Savisesha, Shape or Form of Para Brahma, Sri Krishna as Para Brahma—Brahma's Name and Paricchcda, Abirbhava and Tirobhava, Para Brahma, as One in many—Sri Krishna's Abode and Companions, His Lila, and Rasa-swarupatva, His Lila in human form—Divinity as Power and sweetness—Appearance and Disappearance—Theory of His Beloved Ones, Gopibhàva, Srikrishna as Swayam Bhagavàn (God Himself)—Eternity of Srikrishna's Rupa, Golden Yellow colour of God in Himself—The theory of Relation (Sambandha).

We shall eagerly look forward to the reading of the coming volumes in which the eminent author may let us have a glimpse of the History of the Evolution of the Vaishnava Faith on the basis of the past and present works of the Vaishnava Acharyas and Goswamins, with a comparative estimate of the philosophical conclusions of Srimat Santa Das Babaji's (Braja Videhi Mohanta's) "Bhedabheda siddhanta" and Pandit Sundarananda's "Achintya Bhedabheda."

(b) Meghaduta with commentaries of Sasvata and Sanatan Gosvamin Rs. 8/-

Vangiya Duta-Kavyetihasa (in Sanskrit) Rexin Rs. 5/-

Contributions of Bengal to Smriti Literature Vols 1-3 Rs. 3-8-0

Historical Kavyas in Sanskrit in 4 volumes Rs. 23-8-0

Poetical Works, Etc.

A. Original composition in Snskrit

(a) Sakti Sadhanam Re. 1-0-0

(b) Svapna-Raghuvansam (in the press)

(c) The Priti-Visnupriyam a new Sanskrit drama on the early life of Sri Visnupriya Rs. 1-0-0

(d) The Bhakti—Visnupriyam Re. 1-8-0

(e) The Niskincana—Yasodharam a new Sanskrit drama on the life of Yasodhara—Gopa, Holy consort of Lord Buddha. Rs. 3-0-0

(f) The Sakti—Saradam, a new Sanskrit drama, on the life of Saradamani Devi, Holy Consort of Sri Sri Ramkrishna Paramhamsa Deva Thakur (in the press)

(g) Sanskrit and Bengali—Songs of Dr. Jatindra Bimal Chaudhuri with Bengali translation by Dr. Roma Chaudhury, Princi-